अग्नेरादित्यस्थत्वमुच्यत एवेति ॥ अग्नेरादित्यस्थत्वस्योच्यमानत्वादेवेत्यर्थः ॥ अनेनातोऽक्ष्यादित्ययोरैक्यादिति भाष्यस्थोतः शब्दः सन्निहितेनैक्यादित्यनेनान्वेति ॥ प्रकृतस्यातद्धति परामृष्टस्यादित्यस्थत्वस्यैक्येहेतुत्वायोगात् किन्तुव्यवहितेनात्राप्यग्निरेको वोच्यत इत्यनेनान्वितं भवतीत्युक्तम् ॥ नन्वक्ष्यादित्ययोरैक्यादितिकथं आदित्यमण्डलाक्ष्णोः परस्परं भिन्नत्वेन प्रमितत्वात् ॥ नचवाच्यं आदित्याक्षिपदाभ्यां चेतनग्रहणेनैक्योपपत्तिरिति ॥ स्थानादिव्यपदेशाच्चेति सूत्रानानुगुण्यात् ॥ तत्रहि स्थानत्वेनोक्ताक्ष्णो र्जडत्वेना भिप्रेतत्वात् ॥ य एष आदित्येपुरुषः य एषोन्तरक्षिणिपुरुष इति वाक्यद्वये आदित्याक्षिगतस्य पुरुषपदेन चेतनत्वोक्त्या तयोर्जडत्वेनाभिप्रेतत्वाच्चेत्यातआह ॥ अक्ष्यादित्ययोरेकविधत्वादिति ॥ असावादित्यस्त्रिवृदिववै, चक्षुः शुक्लं कृष्णं कनीनिकेतिश्रुत्यनुसारेण जडभूतादित्यमण्डलाक्ष्णोरेव त्रिवृत्वधर्मयुक्तत्वेनैकविधत्वात् ॥ आदित्यश्चक्षुरितिश्रुतावादित्य चक्षुःपदयोश्चेतनपरत्वेनादित्यमण्डलस्थचेतनस्य जडाक्षिप्रवेशोक्त्या जडाक्ष्यादित्यमण्डलयोरेक चेतनाधिष्ठितत्वधर्मेणैकविधत्वेत्यर्थः ॥

गार्हपत्योनुशशासेत्यादीति ॥ आदिपदेनाथहैनमन्वाहार्थपचन अथ हैनमाहवनीय इत्यादिग्रहणम् ॥ नन्वस्त्यभ्यासः समाख्ययैवतद्बाधो भविष्यतीत्यतआह ॥ अभ्यासस्यचेति ॥ तस्यषष्ठप्रमाणत्वेन दुर्बलत्वादितिभावः ॥ तथाप्यग्नेरादित्यस्थत्वस्यप्राप्तत्वाद्विष्णु पक्षेऽपूर्वतालम्यत इत्यतआह ॥ न चेति ॥ सय एतदेवं विद्वानित्यस्यायमर्थः ॥ सयः कश्चिदेवं यथोक्तं गार्हपत्यमग्निमुपास्तेसोपोहतेविनाशयति पापकृत्यां पापकर्म लोकीभवति अस्मदीये नलोकेनाग्नेयेन तद्वान् भवति सर्वं वर्षशतमायुरेति प्राप्नोति ज्योक् उज्वलं जीवति नाप्रख्यात आस्त इत्यर्थः ॥ नास्य अवराश्चतेपुरुषाश्चास्यविदुषः सन्ततिजा इत्यर्थः ॥ क्षीयन्ते सन्तत्युच्छेदो नभवतीत्यर्थः ॥ किं च तमुपासकं वयं उपभुंजामः पालयामः अस्मिन् लोके जीवन्तममुष्मिन् परेलोकेपीति ॥ नन्वस्त्वर्थवादः ततः किमित्यत आह ॥ अर्थवादस्यचेति ॥ उपसंहरति ॥ अत इति ॥ यतोऽग्निरक्षिस्थ इत्यनेनभाष्ये अतोग्निज्ञानादेवमोक्ष इत्यपि संबन्धः ॥ अत इति ॥ यतोग्निरक्षिस्थ इति ॥ अत इति बलाद्यत इत्यादेरर्थतोलाभः ॥ तयोर्हेतु हेतुमद्भावसमर्थनार्थं तद्यथेति भाष्यमित्युक्तं भवन्ति ॥ भाष्येपुष्करेत्यादेः कमलपत्र इत्यर्थः ॥ मोक्षस्यापीति ॥ मोक्षंविनासर्वथापापाश्लेषासंभवादिति भावः ॥ वक्रसंगत्याऽधिकरणारंभ इति ॥ यद्यपि विष्णुज्ञानान्मोक्ष इत्युक्तम् ॥ तदयुक्तम् ॥ तद्यथेत्यत्राक्षिस्थस्याग्नेर्ज्ञानान्मोक्षश्रवणादिति ऋजुसंगत्यैवाधिकरणमारभ्याग्ने रेवाक्षिस्थत्वमितिपूर्वपक्षे आदित्यस्थत्वं हेतूकर्तुं शक्यम् ॥ पूर्वपक्षे तस्यहेतुकरणं च वक्रसंगत्याऽधिकरणारंभेपिसमं तथापि यथासिद्धान्ते आदित्यदेवता

याआदित्यमण्डलस्थत्वेपि इदमक्षिस्थत्वममृतत्वादिहेतुभिः ब्रह्मण एव तथापूर्वपक्षे अग्नेरादि-त्यस्थत्वेपि अक्षिस्थत्वं ब्रह्मणएवेत्यादित्यस्थत्वस्यविष्णौ समन्वयोनसिध्येत् ।। एवंचादित्यस्थो-विष्णुस्ततश्चार्थादक्षिस्थोपिस एवेति ।। आनन्दमयाद्यधिकरणोक्तमादित्यदेवतास्थत्वमयुक्तं, आदित्यस्थोऽग्निः तथाचाक्षिस्थोप्यग्निरेव, आदित्यश्चक्षुर्भूत्वाऽक्षिणीप्राविशदिति श्रुत्याऽक्ष्या-दित्ययोरेकविधत्वादिति वक्रसंगत्याऽधिकरणारंभेतुपूर्वोक्तस्य विष्णोरादित्यदेवतास्थत्वस्ये-हपूर्वपक्षे आक्षेपात्तन्निरासस्यविष्णोरेवादित्यस्थत्वमिति सिद्धान्ताभिप्रायंविनाऽसिद्धेः तत्स-मन्वयः सिद्धतीतिभावः ।। यद्वा आदित्यस्थत्वस्य पूर्वपक्षे हेतुमात्रत्वेनोक्तौ पूर्वपक्षहेतु-रपिसिद्धान्तिनासमन्वेतव्य इति नियमाभावान्नतत्समन्वयसिद्धिः ।।

उक्तादित्यस्थत्वाक्षेपमुखेनतुपूर्वपक्षे सिद्धान्तेतत्समन्वयोपिकर्तव्य इति य एष आदित्ये-पुरुषोदृश्यत इति वाक्यमपिब्रह्मणि समन्वितं भवतीति भावः ।। ननु भाष्ये य एष आदित्ये पुरुष इत्यग्नेरेवादित्यस्थत्वमुच्यत इति वक्तव्यम् ।। अक्ष्यादित्ययोरैक्यादित्यादित्यस्थत्वस्यैवाक्षिस्थत्व-साधकत्वेनाभिमततया तदुक्तेरेवप्रकृत सङ्गतत्वादादिपदद्वयं बहुवचनं च व्यर्थम् ।। नचाथहे-नमन्वार्यपचनाहवनीययोः सङ्ग्रहायाग्नीनांवेति बहुवचनं चन्द्रमाविद्युतोः सङ्ग्रहाय द्वितीयमादि-पदमितिवाच्यम् ।। चन्द्रविद्युतोरक्ष्णैकत्वाभावेन प्रकृतानुपयुक्तत्वादित्यतआह अग्नीनामेवेति ।। अथाग्नय इत्येत्प्रकरणगतान्वाहार्यादिरूपबह्वग्निश्रुतिसूचनार्थमेवबहुवचनादि- प्रयोगो नतूक्ताभि-प्रायेणेतिभावः ।। एतदमृतमभयमितिभाष्ये उपपत्तेर्निरवकाशत्वोक्त्यैवपक्षनिष्ठत्वं लभ्यत इति तन्नोक्तमिति ज्ञातव्यम् ।। अमृतत्वादिति भाष्यगतादिपदार्थमाह अभयमिति ।। उभयथापीति ।। श्रुतेर्जात्याऽत्मशब्दमादायानेकत्वेनचेत्यर्थः ।। श्रुतेर्निरवकाशत्वं प्रागुपपादितम् ।। नन्वभ्या-सार्थवादयोः कागतिरतआह ।। एवं श्रुतेः सावकाशत्वेनेति ।।

**।। ॐ स्थानादिव्यपदेशाच्च ॐ ।।** (१-२-१४)

तद्यदस्मिन्नितिश्रुतौ तच्छब्दयच्छब्दयोः व्यत्यासेनन्वयमभिप्रेत्यापेक्षितांशं पूरयन्व्याचष्टे यस्मादयं पुरुषोक्षिणीत्यादिना ।। वर्त्मनी इत्यस्य कर्मद्वितीयत्वा संभवादाह ।। वर्त्मनीप्रत्येवेति ।

श्रुतावेवकारेणाक्ष्णोरसंगत्वं लभ्यत इत्यभिप्रेत्याह ।। न चक्षुरिति ।। नन्वात्मशक्तेर्विष्णु-निष्ठत्वेनतल्लिङ्गत्वेपि, स्थानशक्तेश्चक्षुर्निष्ठत्वेन विष्णुलिङ्गत्वासंभवात्कथंभाष्ये एतच्छब्देनो-भयंपरामृश्य, तस्यविष्णुलिङ्गत्वोक्तिरित्यत आह ।। एतदिति ।। स्वसंबन्धेति ।। स ईश

इत्यादितच्छब्दस्य यच्छब्दसापेक्षत्वाद्यदिदं चक्षुषीत्यत्र यच्छब्दं तदर्थत्वेन व्याचष्टे ॥ यद्य-स्मादिति ॥ इदंशब्दस्य सर्पिर्वेत्यत्र संबन्धवैयर्थ्याद्विषयवाक्यगततद्यदस्मिन्निति वाक्यसमानार्थ-त्वलाभायाह ॥ इदं चक्षुषीति ॥

॥ ॐ सुखविशिष्टाभिधानादेवच ॐ ॥ (१-२-१५)

समस्तंपदमितिसूत्रगतैवकाराभिप्रायमाह ॥ किमुतपूर्णज्ञानविधानदपीति ॥ ननु पूर्ण ज्ञानत्वादेर्विष्णुलक्षणत्वेन तदभिधायकमेवप्रमाणमुदाहर्तव्यं नतु विज्ञानमित्यादि तत्रानन्दादेः पूर्णत्वानभिधानादित्यत आह श्रौतमपीति ॥ निरपवादकानन्दादिपदेन पूर्णानन्दादेरे-वाभिधानादिति भावः ॥ श्रुतौब्रह्मपदोक्तं सुखदेः पूर्णत्वं सूत्रेविशिष्ट पदेनगृहीतम् ॥ भाष्ये प्राणोब्रह्मेत्यंशोदाहरणस्यप्रयोजनमाह ॥ नचेति ॥

॥ ॐ श्रुतोपनिषत्कगत्यभिधानाच्च ॐ ॥ (१-२-१६)

आत्मविद्याचेति ॥ प्राणोब्रह्म कंब्रह्मेतिप्रागुक्तविद्येत्यर्थः ॥ नन्वग्निभिरात्मविद्यात्वे-नोक्तविद्याया आदित्यस्थविद्यात्वादक्षिस्थविद्यायाः कथमग्निविषयत्वमत आह ॥ अक्षिस्थ-विद्यायाश्चेति ॥ ननूपक्रमेब्रह्मण उपक्रान्तत्वात्कथमस्मद्विधाया अग्निविषयत्व मन्यथो-पक्रमविरोधः स्यादित्याशङ्क्यनिषेधति ॥ नचोपक्रमेति ॥ ह्वयाम्यग्निमित्यादावितिवेति ॥ यथाह्वयाम्यग्निं प्रथमं स्वस्तय इत्यग्नेरुपक्रमेपि सवितारमूतये, हिरण्ययेनसवितारथेने-त्यादिसवितृश्रुति लिंगादिना तत्प्रकरणं सावित्रं तथात्रापिब्रह्मण उपक्रमेपि अस्मद्विद्येत्यग्नेरु-क्तत्वादग्नीनामेवेदं प्रकरणमित्यर्थः ॥ अथयदुचैवेत्यस्यायमर्थः ॥ अथेदानीं यदुच यद्यपि, अस्मिन् ज्ञानिनि मृते शव्यं, शवदाहादिकर्मकुर्वन्ति ॥ यद्यपि नकुर्वन्ति तथापि तेज्ञानिनः अर्चिषमेवाभिसंभवन्ति ॥ अर्चिरभिमानिनीं देवतांप्रतिपद्यन्त इत्यर्थः ॥ अर्चिषोऽर्चिर्देवताया अहरभिमानिदेवतां, अह्न आपूर्यमाणपक्षं आपूर्यमाणापक्षाद्यान् षण्मासान् उदङ् उत्तरांदिशमेति सविता तान् मासान् उत्तरायणदेवतां तेभ्योमासेभ्यः संवत्सरं संवत्सरदेवतां ततः संवत्सरादा-दित्यं आदित्याच्चन्द्रंमसं चन्द्रमसो विद्युतं तत्रस्यान् पुरुषः समानोवायुः ब्रह्मपरिपूर्णं गमयति प्रापयति, इति श्रुतौतद्विद्यानामित्यनेन श्रुतोपनिषदां अधिकारिणां कस्य ब्रह्मणोगतिरिति सूत्रविग्रहः प्रदर्शितोभवति ॥ श्रुतपदमिति ॥ श्रवणमात्रेणब्रह्मप्राप्त्यसंभवादिति भावः ॥ कशब्देन ब्रह्मग्रहणं कुत इत्यत आह ॥ कंब्रह्मेतीति ॥ कशब्दस्य वायुवाचकत्वं कुत इत्यत आह कोवायुरिति ॥

अन्यथाऽसङ्गतेश्चेति ।। फलकथनरूपत्वाभावे ब्रह्मप्राप्तिकथनस्य प्रकारान्तरेण प्रकृतोपयोगा-भावादितिभावः ।। ननु श्रुतेः प्रबलत्वेन कथमुपपत्यनुसारेण तस्या अन्तर्यामिविषयत्वमत आह ।। श्रुतेरपीति ।। अस्मच्छब्दरूपाया इत्यर्थः ।। स्वभावप्रयुक्त प्राबल्यापेक्षया निरवकाशत्व-प्रयुक्तप्राबल्यस्य बलवत्वादितिभावः ।। तस्या इति ।। पृथगुक्तेरित्यर्थः ।। सर्वगतोय आत्मातद्विद्याभिभधायकत्वादित्यर्थः ।। ननु कंब्रह्मेत्युक्ताद्यविद्याया ब्रह्मशब्दोपेतत्वेनब्रह्मवि-द्यात्वात्कथमात्मविद्येत्युक्तायाः सर्वगतविद्यात्वमित्यत आह ।। तस्यैवेति ।। सर्वगतस्यैवेत्यर्थः ।।

**।। ॐ अनवस्थितेरसंभवाच्च नेतरः ॐ ।।** (१-२-१७)

तत्प्रेरकत्वेनेति ।। श्रुतौ वामनिभामनिशब्दाभ्यां स्त्रीपुरुषसर्वप्रेरकताया उक्तत्वात् ।। उक्तंहितत्वप्रदीपे ।। वामं सौन्दर्यं भामं ओजः तत्प्रधानत्वात् स्त्रीपुरुषशब्दाः वाम भामशब्दशब्दिताः तन्नेतावामनिर्भामनिश्चेति ।। ननुनेयमनवस्थादूषणं मूलक्षयकरत्वाभावादत आह ।। पूर्वेपूर्वेति ।। अभ्युपगम्यचेदमुदितमिति ।। इदमनवस्थादिकं अग्रेः प्रेरणामङ्गीकृत्योक्तं इदानीन्तु तत्प्रेरणैवनसंभवतीत्यर्थः ।। दिव्यदृष्टिगोचर इति ।। ततश्च श्रुतौ य एषोन्तरक्षिणि-पुरुषोदृश्यते, इति दृश्यत्वाद्युक्तिर्युक्तेतिभावः ।। अत्राद्येसूत्रे विषयवाक्यगतलिङ्गरूपसाधकोक्तिः ।। द्वितीये उत्तरवाक्यगतलिङ्गोक्तिः ।। तृतीये प्रकरणरूपसाधकोक्तिः ।। तत्रसुखेन विशिष्ट इति वा विशिष्टंचतत्सुखंचेतिवा सुखे विशिष्ट इति वाविग्रहः ।। आद्ये सुखेन श्रैष्ठ्यं विनानयुक्तमिति सुखस्यापितत्सिद्धिः ।। द्वितीये कडाराः कर्मधारय इति पूर्वनिपातः ।।

तृतीये सप्तमीति योगविभागात्समासः ।। चतुर्थे अक्षिस्थविद्याया निर्विषयत्वाभावे, विष्णुविषयत्वेच हेतूक्तिः ।। पञ्चमेपरपक्षे बाधकोक्तिरिति सूत्रक्रमः ।।

**५. अन्तर्याम्यधिकरणम् । ॐ अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॐ ।** (१-२-१८)

अत्रचक्षुरन्तस्थस्य ब्रह्मत्वेहेतूकृतामृतत्वाक्षेपेण पूर्वपक्षोत्थानादनन्तरसङ्गतिरितिभाष्य-एवोक्तम् ।। अन्तर्यामिणिपृथिव्यादिशरीरत्वश्रवणेपि प्रकृतेरन्तर्यामित्वं कथमागतमित्यतआह ।। तस्यचेति ।। ननुपृथिव्यादिशरीरत्वं कथं प्रकृतावित्यतआह ।। प्रकृतेश्चेति ।। पृथिव्याद्यात्म-कत्वरूपं तत्प्रकृतेरप्युपपद्यत एव ।। ननु शरीरत्वं कथं घटत इत्यत उक्तं शरीरशब्दस्येति ।। इदंपूर्वपक्षशरीरमित्यादौ शरीरशब्दस्य स्वरूपेपि प्रयोगात्प्रकृतेरपि तत्संभवतीति भावः ।। यद्यपि दिगादिशरीरत्वं प्रकृतौनमुख्यं दिगादेरप्राकृतत्वात् ।। तथापि गौणं तदस्तु ब्रह्मणस्तु

पृथिव्यादिशरीरत्वमपि नमुख्यमितिभावः ॥ भाष्येयः पृथिवीमन्तरोयमयमयतीत्यस्योदाहरणस्य प्रयोजनमाह ॥ नचय इति ॥ कारणस्येति ॥ न च प्रागुक्त (स्यभेदेनतस्थस्य) पृथिव्याद्यात्मकत्वासंभवः ॥ कार्यकारणयोर्भिन्नाभिन्नत्वेनाभेदेन तदात्मकत्वस्य भेदेनतत् स्थत्वस्यचाविरुद्धत्वादितिभावः ॥ तथापि प्रकृतेर्जडत्वेनपृथिव्यादिनियामकत्वमनुपपन्नमत आह ॥ पृथिवीमिति ॥ कार्यस्य कारणाधीनत्वादितिभावः ॥ आत्मनियामकत्वाविदितत्वादिकन्तु आत्मप्रवृत्तेः शरीरद्वाराप्रकृत्यधीनत्वेन अप्रतर्क्यमविज्ञेयमित्यादिना प्रकृतेर्दुर्विज्ञेयत्वेनोपपन्नमितिभावः ॥ अतिसुघटत्वादिति ॥ जीवानां पृथिव्याद्यभिमानित्वेन तच्छरीरत्व, तन्नियामकत्वादीनामुपपादननिरपेक्षत्वादिति भावः ॥ नन्वमृतत्वं प्रकृतौकथमित्यत आह ॥ अमृतत्वस्येति ॥ प्रकृत्यादेः स्वरूपनाशराहित्येनेत्यर्थः ॥ उपलक्षणमेतत् ॥ पृथिव्याद्यभिमानित्वादिकमप्युपपन्नमितिबोध्यं ॥ पृथिव्याद्यविदितत्वतदन्तरत्वाख्येति ॥ यंपृथिवीनवेदेत्यादिश्रुत्युदाहरणादावविदितोन्तरश्चेत्युत्तरभाष्यबलात् तद्धर्मव्यपदेशादिति भाष्यमेवं व्याख्यातमिति बोध्यम् ॥ अधिदैवत्वेनजडत्वाभावादिति ॥ यंपृथिंवीनवेदेत्यादौ पृथिव्यादेर्जडत्वेजडस्य ज्ञानमात्राभावेन विशिष्य यमित्यस्यवैयर्थ्यं अप्रसक्तप्रतिषेधापत्तिः ॥ यमात्मानंवेदेति प्रायपाठानुपपत्तिश्चेति भावः ॥ प्रकृतेरिति ॥ तथाचतेन पृथिव्यादि जीवेन साकल्येनावेद्यत्वं हरेरेवेतिभावः ॥

**॥ ॐ न च स्मार्तमतद्धर्माभिलापात् ॐ ॥ (१-२-१९)**

च शब्दस्तुशब्दार्थ इत्यन्वयः ॥ तदेवाह ॥ विष्णुरेवेति ॥

**॥ ॐ शारीरश्चोभयेऽपि हि भेदेनैनमधीयते ॐ ॥ (१-२-२०)**

संसारित्वादीति ॥ अनेन, नचस्मार्तमिति सूत्रे स्मार्तपदं शरीरोपलक्षणमितिसूचितं भवति ॥ आत्मनोन्तर इत्येतज्जीवस्यान्तर्गतमित्यन्यथाप्रतीतिनिरासाय व्याचष्टे ॥ आत्मनः सकाशादिति उदाहृतेति ॥ य आत्मनितिष्ठन्नित्युदाहृतश्रुतिसमाख्यानादित्यर्थः ॥ उक्तप्रकारद्वयेनेति ॥ पृथिव्याद्यात्मकत्वं वा, पृथिव्यादेरेवशरीरत्वमित्युक्तप्रकारद्वयेनेत्यर्थः ॥ नाप्यतद्धर्माभिलापोक्तेरिति ॥ तद्धर्माभिलापाभावोक्तेरित्यर्थः ॥ शीर्यत इति भाष्ये शीर्यते तच्छरि रमतेस्मिन्निति रं शरिचतद्रंचेतिविग्रहः सूचितः ॥ यद्यपीति ॥ योगापेक्षयारूढेः प्रबलत्वाद्रूढमेवपृथिव्यादिशरीरत्वंगाह्यं तच्च विष्णावनुपपन्नमितिभावः ॥ योगांगीकार इति ॥ न चायं योग आत्माविज्ञानपदोक्तचेतने दिगाद्यचेतनेच न संभवतीतिवाच्यम् ॥ चेतनस्यापि देहादिद्वारा,

दिगादेरप्यभिमानिदेहादिद्वाराशीर्णतापाविद्यमानत्वादितिभावः ॥ अत्राद्ये सूत्रेस्वपक्षेविषय-वाक्यगतलिंगरूपसाधकोक्तिः ॥ द्वितीये परपक्षेसाधकाभावोक्तिः ॥ तृतीये जीवपक्षे बाधकोक्तिरितिसूत्रक्रमः ॥ सूत्राक्षरार्थस्तु अन्तर्यामीविष्णुरेव अधिदैवादिप्रकरणेन्तर्यामिनि-ष्ठत्वेन पृथिव्याद्यविदितत्वादिधर्मव्यपदेशादित्यर्थः ॥ न चैव लक्षणापातः ॥ वैयर्थ्यादपितस्या ज्यायस्त्वात् प्रकरण इत्यनेनाभ्यासद्योतनात् ॥

**अदृश्यत्वाधिकरणम् । ॐ अदृश्यत्वादिगुणको धर्मोक्तेः ॐ । (१-२-२१)**

अत्रान्तर्यामिणो ब्रह्मत्वेहेतूकृतस्ययं पृथिवीनवेदेत्युक्तस्यादृश्यत्वस्याक्षेपेण पूर्वपक्षोत्था-नादनन्तरसङ्गतिः ॥ तावत्पूर्वपक्ष इत्यत्र तावच्छब्दः अग्रेपूर्वपक्षविशदीकरणाभिप्रायः ॥ तत्रहेतुमाह ॥ अदृश्यत्वादीति ॥ अस्त्वक्षरशब्दश्रवणं, ततः किमत्राह ॥ तस्यचेति ॥ अक्षरशब्दस्यविष्णाववकाशाभावादित्यर्थः ॥ ननु निर्विकारोक्षरः शुद्ध इत्यादौ विष्णाव-क्षरशब्दस्य श्रवणात् कथं तस्य तत्रावकाशाभाव इत्याशङ्क्य अस्तुवाक्षरशब्दोविष्णौ तथापि प्रकृते बाधकान्नास्य तत्रावकाशङ् इत्याह ॥ यतोस्मादित्यादिना ॥ तावदवतारयतीति सूत्रावतारिकामात्रं क्रियते व्याख्यां त्वग्रेकरिष्यतीति भावः ॥ पृथिव्यादिदृष्टान्तेनेति ऊर्णनाभि-दृष्टान्तस्यप्राथम्येपि तत्रसृजत इति कर्तृत्वप्रतीतेः पृथिव्यादीत्युक्तम् ॥ नचकारणत्वमात्र इति ॥ तथाच विष्णुग्रहणेनेयमुपपत्तिरिति भावः ॥ इत्यतोवाक्यादिति ॥ उपलक्षणंचैतत् ॥ कारणत्वमात्रस्यापि संभवतीहविश्वमित्यनेनैवसिध्या दृष्टान्तकथनवैयर्थ्यात् ॥ बाधकाभावेन्त-रंगस्योपादानत्वस्य त्यागायोगाच्चेत्यपिद्रष्टव्यम् ॥ तस्यामिति ॥ न चेत्प्रकृतावपि कथमुपपन्नमत आह ॥ सामानाधिकरण्येति ॥ चित्प्रकृतेरुत्तमादुत्तमस्याभावेनाक्षरात्पर इति पञ्चम्यौ-वैयधिकरण्यायोगादितिभावः । ननु उपादानतया जगत्कारणत्ववचनं चित्प्रकृतौकथं घटत इत्यत्राह ॥ विकारित्वेनेति ॥ तत्परत इति ॥ उपलक्षणं चैतत् ॥ पूर्वत्र ब्रह्मादेवानां प्रथमः संबभूवेत्युत्तरत्र तस्मादेतस्माद्ब्रह्मनामरुपमन्नं च जायत इति जायमानत्वलिङ्गेन चतुर्मुखपरेण ब्रह्मशब्देन च संदष्टस्य ब्रह्मविद्यामिति ब्रह्मशब्दस्यान्यपरत्वायोगाच्चेत्यपिद्रष्टव्यम् ॥ ईशशब्दप्राप्तोपि नरुद्र इति वक्ष्यमाणानुरोधादाह ॥ रुद्रस्येति ॥ परविद्याविषयत्वप्रतिपादके भाष्ये करणगतवाक्यस्यानुदाहृतत्वात्तदु- दाहरति ॥ अथ परेति ॥ अस्तुपरविद्याविषयत्वोक्तिः ततः किमित्यत आह ॥ परेति ॥ ययेति ॥ तृतीयान्तपदं वेदादिव्यतिरिक्तपरमिति भ्रमं वारयितुं श्रुत्यर्थमाह ॥ यदावेदादीत्यादिना ॥ ब्रह्ममीमांसाशास्त्रव्युत्पादितन्यायानुपकृतं वेदादीत्यर्थः ॥ एतैरिति ॥ तद्व्युत्पादितन्यायोपकृतैर्वेदादिभिरित्यर्थः ॥

॥ ॐ विशेषणभेदव्यपदेशाभ्यां च नेतरौ ॐ ॥ (१-२-२२)

अर्थान्निराकृतमपीति ॥ परविद्याविषयत्वस्यविष्णोरन्यत्र निरावकाशत्वान्यथानुपपत्त्यर्थः । उक्तार्थेहेतुतयेति ॥ तपसाचीयत इत्यत्रालोचनार्थेतपःशब्देनाज्ञानप्रतीतौ तन्निरासाय, यस्य-ज्ञानमयंतप इत्यनेनोक्तेपूर्णज्ञानत्वे तपस आलोचनात्मकत्वं वा, सन्तापात्मकत्वंवाऽस्तु पूर्णज्ञानत्वंकुत इत्याशङ्कानिरासार्थं हेतुतया सार्वज्ञविशेषणोक्तेरित्यर्थः ॥ उपलक्षणं चैतत् ॥ निरुपचरितसार्वज्ञस्य, विशेषणत्वाच्चेतनप्रकृतेरपि तादृश्यत्वादिगुणकत्वमित्यपि द्रष्टव्यम् ॥ विरिञ्चस्यापिनादृस्यत्वादिगुणकत्वमित्याह ॥ तस्मादिति ॥ यः सर्वज्ञ इति श्रुतौ सर्वज्ञइत्यनेनैव ज्ञानस्योक्तत्वात्सर्वविदित्येतद्व्यर्थमित्यत आह ॥ ज्ञानेति ॥ विदॢ लाभे विद् उत्पत्तावित्यतोवेति ॥ तथाच सर्वविदित्यस्य आप्तकामः सर्वोत्पादक इत्यर्थद्वयमुक्तं-भवतीतिनैकस्यापि वैयर्थ्यमितिभावः ॥ निरवकाशत्वात् अवकाशाभावात् ॥ सूत्रखण्डस्येति ॥ विशेषणभेदव्यपदेशाभ्यामित्यस्येत्यर्थः ॥ सूत्रेविशेषणशब्दस्य नकेवलं सर्वज्ञत्वविशेषणा-दित्येवार्थः किन्तु परतः परत्वविशेषणादित्यप्यर्थः ॥ एवं भेदव्यपदेशादित्यस्य हिरण्यगर्भाद्रुद्राद्वाभेदमात्रं नार्थः किंत्वक्षरव्यक्तीनां भेदोपि ॥ तथाचाक्षराणां भेदव्यपदेशाद-क्षरात्परतः परत्वमक्षरस्यैवविशेषणमित्यपि सूत्रयोजनेति भाष्यार्थ इत्यर्थः ॥ प्रकृताक्षरमिति ॥ अदृश्यत्वादिगुणकत्वेनप्रकृतमित्यर्थः ॥ उपादानतयाजगत्कारणत्ववचनस्य कागतिरित्यत आह ॥ यदपीति ॥ निरवकाशपरविद्याविषयत्वादिबाधकसद्भावादित्यर्थः ॥ हिरण्यगर्भादिवाचकानां पदानां कागतिरत आह ॥ ब्रह्मेति ॥ बाधकाभावस्येति ॥ परतः परत्वरूपबाधकाभावस्येत्यर्थः।

॥ ॐ रूपोपन्यासाच्च ॐ ॥ (१-२-२३)

पुण्यपापेविधूयेत्यनेन पौनरुक्त्यपरिहारार्थं निरञ्जन इत्यस्यार्थमाह ॥ निर्लेप इति । विमिश्राणीति ॥ स्वस्यत्वेतानि शुक्लादीनि शुद्धानि अन्येषान्तुमिश्राणीतिभावः ॥ एतेभ्यो विश्वादिभ्यो व्यचीक्लृपत् चकार ॥ अर्थान्तरमाह ॥ एतानीति ॥ ननु तस्यैवेत्यारभ्य व्यमिश्रयदित्यं- तमेवोदाहर्तव्यं तत्रैवरूपोपन्याससत्वेन तस्यैवप्रकृतोपयुक्तत्वात् ॥ एकोनारायण इत्यारभ्य विश्वोहिरण्यगर्भ इत्यन्तमनुपयुक्तं वाक्यं किमर्थमुदाहृतमित्याशङ्क्य एतेभ्य इत्यस्यविश्वादिभ्य इत्यर्थः ॥ विश्वादीनांपूर्वंप्रकृतत्वादितिदर्शयितुं तदुदाहरणमिहाह ॥ तस्यहैतस्येत्यादेरेवेति ॥ अत्राद्येसूत्रे स्वपक्षेलिङ्गरूपसाधकोक्तिः द्वितीयेपरपक्षेबाधकस्य स्वप-क्षेबाधकाभावस्यचोक्तिः ॥ तृतीये रूपोपन्यासादिति स्वपक्षसाधकस्य परपक्षबाधकस्य-चोक्तिरितिसूत्रक्रमः ॥

**वैश्वानराधिकरणम् । ॐ वैश्वानरः साधारणशब्दविशेषात् ॐ । (१-२-२४)**

यद्यपिवैश्वानरनाम्नः सूत्रभाष्ययोः अग्नाविष्ण्वोः साधारण्यस्योक्ततया उभयत्रप्रसिद्धता तथापिवैश्वानरशब्दस्य श्रुत्यन्तरेऽग्नौप्रयोगाद्विषयवाक्ये अग्निशब्दसामानाधिकरण्याद्वाऽन्यत्रप्रसिद्धत्वं नाभिप्रेतम् ॥ येन श्रुत्यन्तरेविष्णावपिप्रयोगादुभयत्र प्रसिद्धतास्यात् ॥ किन्तु लोकतः ॥ अत एव टीकायां लोकतोन्यत्रप्रसिद्धेत्युक्तम् ॥ सूत्रादावुक्तसाधारण्यन्तु अन्यत्रप्रसिद्धेर्लिङ्गानां च निरवकाशत्वेनतुल्यबलतया नतु वैश्वानरशब्दस्यान्यत्रप्रसिद्धेति टीकायामेवोक्तम् ॥ विश्वजीवान्तरत्वाद्यैर्लिङ्गैरिति भाष्यकारीया लिङ्गत्वोक्तिस्तु सिद्धान्ते-वैश्वानर शब्दस्य यौगिकत्वदर्शनार्थमवयवार्थे तात्पर्यकथनात् । अन्यथा वैश्वनरत्वाद्यैरित्यवक्ष्यत् ॥ अनन्तरसङ्गतिस्तु गताधिकरणोक्त- सर्वगतत्वाक्षेपेण पूर्वपक्षोत्थानादितिभाष्य एवोक्ता ॥ पाचकत्वाद्यनेकलिङ्गसमन्वय इति ॥ तेनपादसङ्गतिरूपपन्नेति भावः ॥ नन्वभिमानपदे-नसर्वगतत्वं कथं लभ्यत इत्यत आह ॥ अभिमत इति ॥ तेजोभूतंवास्यादिति ॥ अतोनाग्निविष्ण्वोरितिभाष्येऽग्निशब्देन अतएवनदेवताभूतं चेत्युत्तरसूत्रानुरोधेन तेजो भूतमपिविवक्षितमित्युक्तं भवति ॥ नन्वत्रप्रसिद्धिरस्तु तथापिश्रुतेर्विष्णुविषयत्वमस्तु इत्यतआह ॥ श्रुतेरिति ॥ वैदिकेति ॥ अन्यविद्याया अपि विष्णुविषयत्वेवैदिकानां शब्दानां योयंविद्या-भेदव्यवहारः इयमग्निविद्येत्यादितद्विरोधः स्यादित्यर्थः ॥ ननु व्यवहारः प्रकारान्तरेण भविष्यतीत्यत आह ॥ नहीति ॥ साधारणस्यापि वैश्वानरशब्दस्य विष्णुपरत्वसंभवादित्यन्वयः तत्रहेतुरनवकाशात्मशब्देति ॥ आत्मशब्दस्यानवकाशत्वं कुत इत्यत उक्तं आत्मशब्दः परेविष्णाविति ॥ तर्हिप्रसिद्धेः कागतिरतआह ॥ प्रसिद्धेरिति ॥ अन्यथाभिव्यक्तेरित्यादि-वक्ष्यमाणन्यायेनेतिभावः ॥

**॥ ॐ शब्ददिभ्योऽन्तः प्रतिष्ठानान्नेति चेन्न तथा दृष्ट्युपदेशादसम्भवात्पुरुषविधमपि चैनमधीयते ॐ ॥ (१-२-२६)**

नकेवलमग्निशब्दसामानाधिकरण्यं वैश्वानरशब्दस्य श्रूयते अपित्वग्निलिङ्गश्चेत्याह ॥ तथाग्नि-लिङ्गश्चेति ॥ सूत्रेशब्दादिभ्य इति बहुवचनं लिङ्गबाहुल्याभिप्रायेणेति भाष्येबहुलिङ्गप्रतिपादक-वाक्योदाहरणमितिभावः ॥ अग्निकर्मचेति ॥ अस्यापि लिङ्गत्वेपि ब्राह्मणपरिव्राजकन्यायेनसूत्रे अन्तःप्रतिष्ठानादिति पृथगुक्तमित्यभिप्रेत्यभाष्येपाचकत्वे नान्तःप्रतिष्ठानमित्युक्तमितिभावः ॥ ननु बृहदारण्यकादिस्थवाक्योद्धारः किमर्थ इत्यत आह अत्रसर्वेति ॥ तथाचयस्त्वेतमिति

विषयवाक्येऽग्निशब्दाभावेपि बृहदारण्यकादौतत्सद्भावात् शब्दादिभ्यः सौत्राक्षेपोपपत्तिरितिभावः ।। समाख्यारूपेणवेति ।। अनेनस्मर्यमाणमनुमानं स्यादित्युक्तसमाख्यावदग्निपक्षेपिसमाख्या-प्रदर्शिताभवति ।। ऋत आजातमित्यस्यार्थः सम्यगुज्ञानायाभिव्यक्तमिति ।। सम्यगित्याङोर्थः ।। जनानामित्यन्तमत्रापि संबंध्यते ।। अतिथिमित्यस्यार्थोऽत्यन्तमिति ।। आसन्नित्यस्यार्थः स्वास्यतयेति जनयन्तेत्यस्यद्वितीयाडागममभिप्रेत्याह ।। अकुर्वन्निति ।। उपसर्गस्यधात्वर्थ-बाधकत्वादेवमुक्तम् ।। अरतिशब्देनपादमिति व्याख्याकस्मान्निमित्तादतआह गतिसाधनत्वाद-रतिपाद इति ।। लोके गमनेनारतिदर्शनाद्रतिविरुद्धगतिसाधनत्वात्पादो अरतिशब्दार्थ इत्यर्थः ।। यद्वा करणसाधनात् ऋगतावित्यस्मादतिप्रत्यये गुणेचसति निष्पन्नोऽरतिशब्दः पादवाचक इत्यर्थः ।। ननु ऋत इति सप्तम्याः चतुर्थीत्वं कथमित्यतः श्रुत्यन्तरसमाख्यानादित्याह ।। चतुर्थेति ।। थशब्दस्यान्नवाचकत्वं कुत इत्यतस्तत्रप्रमाणमाह ।। अन्नमिति ।। देवा अग्निं स्वमुखत्वेनाकुर्वन् इत्युक्तं तत्रमानमाह ।। अग्निर्वा इति ।। अग्निनामलिङ्गादेः कथं सावकाशत्वमित्यतस्तद्दर्शयति ।। तत्रयदित्यादिना ।। आत्मशब्दादेरप्यन्यत्रावकाशोऽस्त्येवेत्यत आह ।। न चेति ।। तस्यनिरवकाशत्वादेरुपपादितत्वादितिभावः अग्निनामलिङ्गादेस्तदुपास-नार्थमुक्तत्वाद्विष्णोस्तदभावः स्यादित्याशङ्क्य निषेधति ।। न च वाच्यमिति ।। ननु सर्वना-मासर्वलिङ्ग इति श्रुतौसर्वशब्दस्य संकोचेन जीवगतदुष्कर्मादि दुःखादिकमपिकुतो नग्राह्यमित्यत आह ।। वाक्यान्तरस्येति ।। निरनिष्टो निरवद्य इति वाक्यां तरविरोधेन योर्थः स्थाप्यते सर्वनामलिङ्गदिमत्वरूपोर्थः तदर्थत्वात् सोऽर्थोयस्यासौ तदर्थः तस्यभावस्तत्वं तत्स्यादित्यर्थः ।। तथाचवाक्यांतराविरुद्ध एव सर्वनामेत्यादिश्रुत्यर्थोवक्तव्यः दुःखित्वादिरूपार्थस्यचनिरनिष्टो निरवद्य इत्यादिश्रुतिविरुद्धत्वान्नसोर्थः श्रुतेरितिभावः ।। ननु योषितमग्निं ध्यायीतेत्यादा-वेवाविद्यमानस्योक्तत्वाद्वेदाद्याः ध्यानार्थं नाविद्यमानं ब्रुवत इति कथमित्यत आह ।। वाक्यान्तरस्येति ।।

अंगारसदृशीनारी घृतकुंभसमः पुमानित्यादिप्रमाणबलादग्निसादृश्यस्य योषितिप्रमाणावि-रुद्धत्वात्तदर्थत्वं योषितमिति वाक्यस्येत्यर्थः ।। विश्वमित्यनेन प्रपञ्चरूपत्वं हरेरुच्यत इत्यन्यथाप्रतीतिनिरासायाह ।। विश्वं पूर्णमिति ।। श्रुतावरमित्यस्यालमित्यर्थः ।। को न आत्माकिं ब्रह्मेत्यादिना आत्मत्वाद्यसंभवादित्यर्थ इत्यनेन अनात्तत्वादितिभाष्यमेवयोजितम् ।। कोन आत्माकिं ब्रह्मेत्यारंभाच्च विष्णुरेववैश्वानरः ।। ब्रह्मात्मशब्दयोर्वैश्वानरविद्योपक्रमे श्रवणेपि कुतस्तदुक्तस्यविष्णुत्वमित्यतः अनात्तत्वादित्यादिनाप्रमाणेन विष्णोरेवात्मशब्दार्थ व्याप्तत्वगुण-

पूर्णत्वयोः संभवेनान्येषामसंभवादिति भाष्यगतादिशब्दद्वयोपात्त श्रुत्यंशोदाहरणपूर्वकं पुरुष-सूक्तस्य समाख्यारूपत्वंस्पष्टमाह ॥ शीर्ष्णोद्यौरित्यादिना ॥ मूर्धावित्यस्यायमर्थः ॥ सुतेजाः शोभनं तेजः यस्यासौसुतेजाः द्युलोकः मूर्धेव मूर्ध्नः सकाशाज्जातः विश्वरूप आदित्यः चक्षुर्जातः पृथक् नानावर्त्मानि मार्गाः यस्यासौवायुः प्राणः प्राणात् बहुलः शरीरसन्दोहो मध्यदेहः तस्माद्रयिः धनं बस्तिः मूत्रसंहारस्थानं तस्माज्जातमित्यर्थः ॥ इतरत् स्पष्टम् ॥ सिद्धमित्यभावे मूले पदानामन्वयाप्रतीतेश्चशब्दस्योक्तार्थप्रतिपादकत्वं रूपप्रदर्शकत्वाभावा-दितिभावः ॥ अपिपदेनैवेति ॥ सूत्रेपुरुषविधमित्यनेनैवोच्यमानायाः श्रुतिसमाख्यायाः द्वितीयसूत्रोक्त स्मृतिसमाख्याया असंभवशब्दोक्तप्रकरणेनच समुच्चयस्यापिपदेनैवसिद्धेश्चशब्दः शङ्कानिवृत्यर्थः सन् भाष्योक्तस्यैवसूचक इत्यर्थः ॥ ननु श्रुतेःप्रथमं प्रतिज्ञातत्वात्सैवप्रथममु-दाहार्या स्मृतिःकुत उदाह्रियत इत्यतआह ॥ प्रतिज्ञात्विति ॥ साक्षादिति ॥ अर्थात्तत्साधकत्वंतु पुरुषसूक्तस्य विष्णुपरत्वेन व्याख्यानकरणादेव सिध्यतीतिभावः ॥ आधिक्यक्रम एवाभि-प्रायोयस्याः: सा तथेत्यर्थः ॥ परोविलक्षण इति तथाच परम इत्यनेन पौनरुक्त्यमितिभावः ॥

श्रुतिविरोधादिरूप प्रागुक्तानुपपत्तिरेव व्यवहारस्थाभि व्यक्त्यादिनिमित्तकत्वेनोपचरि-तत्वाङ्गीकारे हेतुरित्यर्थः ॥

॥ **ॐ सम्पत्तेरिति जैमिनिस्तथाहि दर्शयति ॐ** ॥ (१-२-३१)

ननुसाक्षादपीति सूत्रे लौकिकव्यवहारस्योपचरितत्वमङ्गीकृत्याग्न्यादिशब्दानां परमात्म-वाचिकत्वं समर्थितं तथासूक्तादिव्यवहारस्या(ग्न्यादि प्रतिपादकत्वनिमित्तकत्वेन)प्युप चरितत्व-मङ्गीकृत्य सूक्तानां विष्णुपरत्वं व्यवस्थाप्यतां किमर्थमेतैः सूत्रैः सूक्तादिव्यवहास्य-मुख्यत्वसमर्थनमित्यत आह ॥ अत्र व्यवहारस्येति ॥ अत्र सूक्तादिविषय इत्यर्थः ॥ प्रागुक्तैवा-नुपपत्तिः नापिव्यवहारार्थत्वेनान्यथोपपत्तिः ॥ अनादित्वादितिप्रागुक्तानुपपत्तिरुक्तैव नपुनर्व-क्तव्येत्यर्थ इति भावबोधे ॥

॥ **ॐ आमनन्ति चैनमस्मिन् ॐ** ॥ (१-२-३२)

तदनभ्युपगमाच्चेति भावेनेति ॥ नह्यन्यविद्ययान्यगतिर्युक्तेति यत्तत्रसिद्धान्तयुक्तित्वेनोक्तं तस्यैवह्यन्योपासकोऽन्यं प्राप्नुत इत्युपन्यासादितिभावः ॥ अत्र चाद्येसूत्रेस्वपक्षे श्रुतिरूप-साधकोक्तिः ॥ द्वितीये समाख्यारूपसाधकोक्तिः अत्रेति शब्दस्याद्यसूत्रानुषक्तेन विष्णुर्वैश्वानर

इत्यनेनान्वयः ॥ तथाच विष्णुर्वैश्वानर इति गीतायांस्मर्यमाणं विष्णोर्वैश्वानरत्वं अत्रापि- विष्णुर्वैश्वानर इत्यस्यानुमापकमितिसूत्राक्षरार्थः ॥ तृतीये वैश्वानरशब्दमात्रविषयसाधारण- बाधकाभावस्य पुरुषसूक्तसमाख्यायाश्चोक्तिः ॥ चतुर्थे परमतनिरासः ॥ पञ्चमे लौकिकस्य वैदिकस्य चान्यत्र व्यवहारस्यगत्युक्तिः वाच्यार्थधीव्यवहित लक्षणादिकंविनासाक्षान्मुख्यवृत्या ब्रह्मणः शब्दार्थत्वेपि व्यवहारविरोध इति चास्याक्षरार्थः । षष्ठसप्तमाष्टमेषु वैदिकाग्न्यादि- सूक्तनियमस्यगत्युक्तिः ॥ नवमे अष्टमोक्तगतिबाधकोद्धार इति सूत्रक्रमः ॥ यद्यप्यनुस्मृत्यनन्त- रमभिव्यक्तिरभिव्यक्त्यनन्तरं संपत्तिः तथापि अभिव्यक्त्यनन्तरमपि संपत्तेः प्रागुनुस्मृतिरपेक्षितेति दर्शयितुमनुस्मृतेर्मध्येयुक्तिरितिभावः ॥ इति पाण्डुरङ्गि केशवाचार्यविरचित श्रीतत्वप्रकाशिकाविवृतौ प्रथमाध्यायस्य-द्वितीयश्चरणः ॥

## ॥ अथ तृतीयः पादः ॥

### १. द्युभ्वाद्यधिकरणम् । ॐ द्युभ्वाद्यायतनं स्वशब्दात् ॐ । (१-३-१)

नचान्यत्रप्रसिद्धशरीरत्वसाहित्यादन्तर्यामित्व मन्यत्रप्रसिद्धजायमानत्वसाहित्यात् द्युभ्वाद्याय- त्वमप्यन्यत्र प्रसिद्धमिति पादमसङ्गतमेतदितिवाच्यम् ॥ अन्यत्रप्रसिद्धसाहचर्येण परतोन्यत्र प्रसिद्धिवदुभयत्रप्रसिद्धिसाहचर्यं विनोभयत्र प्रसिद्धत्वस्यापि सत्वात्तेनरूपेणैतत्पादान्तर्भावस्य सूत्रभाष्ययोरभिमतत्वादितिभावः ॥ श्रुत्यादिप्रसिद्धानामिति ॥ अनेन श्रुतिलिङ्गादिभिस्तुल्य- त्वमुभयत्रप्रसिद्धत्वमित्युभयत्रप्रसिद्धानां शब्दानां लक्षणमुक्तं भवति ॥ पूर्वपादद्वयस्यात्रापि भिन्नभिन्नपादयोरेवनामलिङ्गसमन्वय इति स्यात् तदर्थमाह ॥ नामलिङ्गात्मकानामिति ॥ तत्र श्रुतिसाधरण्येनोभयत्रप्रसिद्धत्वंदर्शयति ॥ अत्रेति ॥ गौतमेति संबुद्धिः ॥ वायुलक्षणेनसूत्रेण सर्वाणिभूतानिसंदृब्धानिबद्धानि आकाशे प्रकृतौ प्राणाः इन्द्रियाणि प्राणिनोजीवाः दिव्यानि दिविभवानि वसूनि पूर्वत्रेवात्रापि आत्मशब्देन सिद्धान्तादातिदेशिकीसंगातिः ॥ उक्तसाधारण्यमेवेति ॥ श्रुतिसाधारण्यमित्यर्थः ॥ उपलक्षणंचैतत् ॥ जायमानत्वस्यापि जीवरूपकोद्गुणस्थापकत्वेन ग्राह्यत्वात् ॥

ननु जीवेशाभेदेन जीवपरविद्याविषयत्वादिब्रह्मलिङ्गानां जीवेसंभवात् जीवलिङ्गस्यापि जायमानत्वस्यविष्णौसंभवः किं नस्यादत आह ॥ नचतथेति ॥ अत्रसूत्रे स्वेतिशब्दः स्वशब्दइति विग्रहाश्रयणे विषयवाक्ये स्वशब्दाभावात्तत्पर्यायात्मशब्दादित्यर्थपरत्वेन भाष्यं

विष्णुतत्वनिर्णयानुसारेणव्याचष्टे ।। स्वशब्देति ।। यद्यप्यात्मशब्दादित्युक्तौलाघवं तथापि विष्णावसा धारण्यं तस्य नज्ञापितं स्यात् ।। तच्छब्दादित्युक्तौतुशब्दविशेषोऽनेनोपात्तः स्यादत उभयार्थं स्वशब्दादित्युक्तम् ।। एवमुक्तौ स्वस्य शब्द इत्यपि विग्रहस्य विवक्ष्यमाणत्वादसाधारण्यं ज्ञापितं भवति ।। षष्ठीसमासमात्रविवक्षायां तल्लिङ्गादित्यादाविवात्रापि शब्दविशेषः प्रयुज्येत ।। अथवायथालोकेऽन्यत्र प्रसिद्धोपिस्वशब्दः विष्णोः सकाशात्संभूते चतुर्मुखे स्वभूरिति प्रयोगादिवशाद्विष्णौमुख्यः तथालोके अन्यत्रप्रसिद्धोप्यात्मशब्दः विष्णोः सकाशात्संभूते चतुर्मुखे आत्मभूरिति प्रयोगाद् ब्रह्मात्मभूतिः स्वभूतिरितिवचनाच्च विष्णौमुख्य इत्यभिप्रेत्य सूत्रेस्वशब्दादित्युक्तमिति भावः ।।

**।। ॐ मुक्तोपसृप्यव्यपदेशात् ॐ ।। (१-३-२)**

मुक्तेति ।। सूत्रे तद्भाष्येच चशब्दाभावेन तन्न स्वातन्त्र्येण हेत्वन्तर- प्रतिपादकं किन्तु पूर्वसूत्रोक्ताक्षेपसमाधानार्थमित्याशयेनोत्तरसूत्र निरसनीयपूर्वपक्षमाह ।। ननु विष्णावपीति ।। मुक्तप्राप्यत्वोक्तेरिति ।। अनेनसूत्रे भावप्रधानोनिर्देश इत्युक्तं भवति ।। अत एव बहुनाना किमुक्तेनेति वाक्यं प्रामाणीकृतम् ।। अत्रमुक्तप्राप्यत्वं प्राप्यान्तर रहितत्वेसतिप्राप्यत्वमात्रं नत्वर्चिरादिवत्प्राप्यत्वमात्रं अथवामुक्तपदेन लिङ्गदेहभगवन्तोऽभिधीयन्ते ।। तत्प्राप्यत्वं विष्णोरन्यत्र क्वापिनवर्तत इति नातिप्रसङ्गः ।। पराणां मुक्तानामिति ।। तथाचैतद्वाक्यं मुक्तप्राप्यत्व प्रतिपादकमिति भावः ।।

**।। ॐ नानुमानमतच्छब्दात् ॐ ।। (१-३-३)**

आगमस्यानुमानात्मकत्वं कीदृशमित्यतस्तद्दर्शयन् रुद्रपदमुपलक्षणपरमित्यभिप्रेत्य नानुमानात्मकेति भाष्यं व्याचष्टे ।। प्रागुक्तानुमानेति ।। ननु रुद्रप्रधानयोः स्वरूपतः श्रुत्यादिसिद्धत्वान्ततदागमपरिकल्पितत्वमित्यतः सर्वाश्रयत्वेनेति पूरितम् ।। सूत्रे अनुमानमितिपदच्छेदे प्रमाणत्वेनानुमीयत इति व्युत्पत्या आगमस्यानुमानपदवाच्यत्वं रुद्रप्रधानयोः सर्वाश्रयत्वे नानुमानशब्दवाच्यागमप्रतिपाद्यत्वेनानुमानमस्यास्तिप्रतिपादकत्वेनेति विवक्षायामर्शाद्यजन्तानुमानशब्दवाच्यत्वमितिद्रष्टव्यम् ।। अनुमानपदच्छेदे उक्तव्युत्पत्या आगमपरादनुमानशब्दाच्छैषिकेऽणिकृते आगमप्रतिपाद्यं रुद्राद्यनुमानमितिज्ञातव्यम् ।। तत् श्रुतिलिङ्गाद्यभावादिति ।। अनेनभस्मधरेति भाष्ये भस्मधरपदेनात्मशब्दप्रतियोगिश्रुतिग्रहणम् ।। उग्रपदेन मुक्तप्राप्यत्वप्रतियोगिलिङ्गग्रहणम् ।। तथाच भस्मधरोग्रत्वादिनामलिङ्गात्मक रुद्रसंबन्धिशब्दाभावादित्यर्थः ।।

आदिपदेन नामलिङ्गादिप्रतिपादकशब्दान्तरग्रहणमितिभावः ॥ अत्रप्रसज्यप्रतिषेधार्थकनञः क्रियासापेक्ष्यत्वेनासामर्थ्येपि असूर्यं पश्याराजदारा इत्यादौ समासोऽस्तीति कर्तरिचेत्यत्र ज्ञापितत्वाद्वा निर्मक्षिकमित्यादावविवार्थाभावे यदव्ययमित्यव्ययीभावसमासाश्रयणाद्वाऽतदितिपदं भाष्ये तच्छब्दाभावादितिव्याख्यातम् ॥ अव्ययीभावत्वेप्यम् न भवति अपञ्चम्या इत्युक्तेरितिभावः ॥ एवमतद्धर्मेत्यत्रापि द्रष्टव्यम् ॥ ननु तर्हिपाशुपताद्यागमेन तस्यसर्वाश्रयत्वादिसिद्धिरिति चेन्न ॥ तस्याप्रामाण्यात् ॥ न च दृष्टविधायकवाक्यदृष्टान्तेनतस्य प्रामाण्यं साध्यत इति वाच्यं तदप्रामाण्यस्यफलविसंवादिरुद्रादिवाक्यदृष्टान्तेन साधयितुं शक्यत्वात् ॥

एवं सर्वेषामपि स्ववाक्येन सर्वाश्रयत्वादेः संभवेनातिप्रसङ्गदुष्टत्वादुपेक्षणीय- मित्याह ॥ आगमेति ॥ ननु भाष्ये प्रधानस्यानिराकृतत्वाद्भवद्भिः किमिति तन्निराक्रियत इति शङ्कते ॥ अभाषितमिति ॥ अन्यत्रेति ॥ विष्णुतत्वनिर्णय इत्यर्थः ॥ ननु विष्णुतत्वनिर्णये प्रकृतिपदेन रुद्र एवकिं न गृह्यत इत्यत आह ॥ नचेति ॥ पृथगुभयग्रहण इति ॥ तत्र प्रकृतिपदेन प्रकृतेः भाष्येरुद्रशब्देन रुद्रस्यैव ग्रहण इत्यर्थः ॥ योगस्येति ॥ तथाच योगापेक्षयारूढेर्बलवत्वाद्रूढयारुद्रादिरेव ग्राह्य इत्यर्थः ॥ तदभावादिति ॥ विष्णौरूढ्यभावादित्यर्थः ॥ अस्तूभयत्ररूढिस्तथापि विष्णोर्द्युभ्वाद्यायतनत्वनिश्चयोनोपपद्यत इत्यत आह ॥ उभयत्रेति ॥ ननूभयत्ररुद्रशब्दस्यरूढिसाम्येपि निरवकाशविष्णुलिङ्गादिबलान्निश्चयोपपत्तिरित्यतआह ॥ नहि श्रुत्यन्तर इति ॥ प्राणानां ग्रन्थिरसीत्यादि समाख्याश्रुत्यन्तर इत्यर्थः ॥ तादृशा इति ॥ विष्णुदत्ता इत्यर्थः ॥ सर्वं शृणाति हिनस्तीतिवा शंरुणाद्धिप्रतिबन्धातीतिवाशर्वः ॥

**॥ ॐ प्राणभृच्च ॐ ॥ (१-३-४)**

शारीरश्चेत्यादाविवचशब्देन नञ्मात्रसमाकर्षे एतैरेवेति भाष्यमुत्सूत्रितं स्यादत आह ॥ चशब्दादिति ॥

**॥ ॐ भेदव्यपदेशात् ॐ ॥ (१-३-५)**

भेदव्यपदेशादिति सूत्रस्यचशब्दरहितत्वेन स्वपक्षसाधनपरपक्षदूषणेवा नहेत्वंतराभिधायकत्वमित्यतस्तन्निवर्तनीयपूर्वपक्षमाह ॥ ननु किमिति ॥ एवं प्रकरणादित्यत्रापिनेयम् ॥ अत्रैवान्यमीशमित्यत्रप्रतियोग्याकांक्षायां द्वासुपर्णेत्यादिवाक्यबलाज्जीवस्यैव तत्वेनग्राह्यत्वाज्जीवभेदप्रतिपादकमिदं वाक्यमिति भावः ॥ विशेषेणेत्यत्रतु व्याख्यानांतरमभिप्रेत्यप्रमाणी-

कृतेत्यविरोध इतिभावः ॥ यद्यप्यस्य सूत्रस्य पूर्वपक्ष्यभिप्रेतरुद्रादिचतुर्णामपिपरमात्मपरत्वेन व्याख्यानं कर्तुं शक्यं तथाप्येतत्साधितैक्याभाव एव हेत्वंतरमभिधाय स्थित्यदनाभ्यां चेतिसूत्रे प्रधानस्यसर्वथाग्रहणासंभवाद्वायुरुद्रयोरपि वायुत्वादिनाग्रहणायोगाज्जीवत्वावच्छिन्नादीश्वरस्य-भेदः प्रतिपाद्यत इत्यंगीकर्तव्यं अत एव तत्रभाष्ये जीवशब्दः प्रयुक्त इति भावः ॥

**॥ ॐ प्रकरणात् ॐ ॥ (१-३-६)**

आरभ्याधीतत्वेनेति ॥ एतत्प्रकरणारंभेद्वेविद्ये(वेदितव्ये)त्युक्त्वा- त्परविद्याविषयत्वस्य विष्णुलिङ्गत्वात्तद्युक्तस्यैवान्यमीशमिति द्वितीयान्तपदप्रतिपाद्यत्वादित्यर्थः ॥

**॥ ॐ स्थित्यदनाभ्यां च ॐ ॥ (१-३-७)**

ननु श्रुतावदनस्य प्रथमं वक्तव्यमित्यत आह ॥ अत्र श्रुतीति ॥ व्यावहारिकमिति ॥ व्यावहारिकवेदनलक्षणं प्रामाण्यमित्यर्थः । ननु प्रामाण्ये व्यावहारिकत्वं तथात्वें तत्वावेदन-लक्षणप्रामाण्यस्यापि व्यावहारिकत्वेनाविशेषादितिद्रष्टव्यम् ॥ नन्वनुमानमेवमिथ्यात्वेमानमत आह ॥ नचानुमानमिति ॥ कुतोनेत्यत आह ॥ स्वस्यैवेति ॥ स्वरूपाभिधायकस्येति ॥ द्वासुपर्णेत्यादेरित्यर्थः ॥ अन्यथेति ॥ स्वरूपाभिधायकस्य सत्यत्वानभिधायकत्वे इत्यर्थः ॥ अत्राद्येसूत्रे सन्निहितश्रुतिरूपस्वपक्षसाधकोक्तिः ॥ द्वितीये आत्मशब्दस्यामुख्यत्वनिरासाय-लिङ्गरूपसाधकोक्तिः ॥ तृतीये रुद्रप्रकृतिपक्षे साधकाभावस्य तत्साधकश्रुत्यादीनाम-न्यपरत्वस्यचोक्तिः ॥ चतुर्थे जीववायुपक्षेसाधकाभावोक्तिः ॥ पञ्चमे जीवब्रह्मभेदेऽन्यमीशमिति भेदव्यपदेशरूपसाधकोक्तिः षष्ठे प्रमाणस्य ब्रह्मपरत्वोक्तिः ॥ सप्तमे तत्रैवलिङ्गरूप-साधकोक्तिरिति सूत्रक्रमः ॥

**२. भूमाधिकरणम् । ॐ भूमासंप्रसादादध्युपदेशात् ॐ । (१-३-८)**

श्रुत्यादिसाधारण्येनोभयत्र प्रसिद्धकमाह ॥ अत्रप्राणोवेति श्रुत्याचेति ॥ समाख्या-रूपश्रुत्येत्यर्थः ॥ अत्र यद्यपि भूमशब्दोबहोर्भावो भूमेति भावेनिष्पन्नो बहुत्ववाची बहुत्वसङ्ख्याचलोकतोन्यत्रप्रसिद्धा तथापि बह्वन्नमित्यादौ बहुशब्दस्य वैपुल्ये पिप्रयोगाद्भू-मशब्दस्य योवैभूमेत्यादौ धर्मिणिप्रयोगाद्वैपुल्यविशिष्टधर्मिवाचकत्वं तस्योपपद्यत इति उभयत्र प्रसिद्धत्वाविरोधादिति भावेन वायुविष्णुसाधारण इत्युक्तम् ॥ नच प्राणोवा इत्युपक्रमाद्विष्णुर्वा इति समाख्याया दुर्बलत्वात्कथं ततः साधारण्यमितिवाच्यम् ॥ अन्तरधिकरणे

अदृश्यत्वलिङ्गेन्द्रादिश्रुत्योः संदेहबीजत्ववदिहाप्युपक्रमसमाख्ययोः प्राबल्याद्यविवेकेनोभयत्र प्रसिद्धिहेतुत्वसंभवादिति भावः ॥ स एवाधस्ताद्योवैभूमेत्यादिना भूम्न्युक्तसर्वगतत्वादेर्ब्रह्मैवेदममृतमित्यादिना द्युभ्वाद्यायतने श्रवणाद्भूम्नोऽन्यत्वे द्युभ्वाद्यायतनत्वमप्यन्यत् स्यादिति पूर्वाक्षेपेण पूर्वपक्षोत्थानादनंतरसंगतिः ॥ योवैभूमापूर्णस्तत्सुखम् अल्पेसुखेसुखशब्दोनास्तीति भूमैव पूर्ण एव सुखं पूर्णसुखमेव मुख्यंसुखमित्यर्थः ॥ आशावसानमुक्त्वेति ॥ अनेन साक्षादाशाशब्दवाच्य सरस्वत्युत्तमत्वरूपयुक्तिरुक्तेतिभावः ॥

उपक्रमादिति ॥ तस्याः षष्ठप्रमाणत्वादितिभावः ॥ पूर्णसुखरूपत्वाभिधानादिति ॥ सम्यक् प्रसीदत्यनेनेतिव्युत्पत्या संप्रसादशब्दः पूर्णसुखत्वाभिधायक इति भावः ॥ उपरीत्यस्यैवार्थ उत्तमत्वेनैवेति ॥ तथाचसौत्राधिशब्द व्याख्यानरूपत्वमुपपद्यत इति भावः ॥ विश्वशंभुवमिति ॥ विश्वं चतत् शं च विश्वशं तत् भवत्यस्मिन्निितिवा विश्वशंभूः आश्रयः विश्वशंभूरितिवाविग्रहः ॥ सर्वपरममकारवाच्यमिति ॥ अनेनपरमामित्यत्र परमश्चासावश्चेति विग्रहः सवर्णदीर्घेण रूपसिद्धिरितिभावः ॥ विरोधादेवेति ॥ विष्णुवाय्वोरुभयोः सर्वोत्तमत्वायोगादितिभावः ॥ अत एव पूर्वं वायोरपीत्यपिशब्दः ॥ यद्वायथाविष्णोः स्वेतरसर्वोत्तमत्वं तथानवायोरपिस्वेतरसर्वोत्तमत्वमिति नच सर्वोत्तमत्वं वायोरपीत्यस्यार्थः ॥ अत्रापिशब्दः संभावनार्थः ॥ कुत इत्युक्ते विरोधादेवेत्युक्तं कुत्रापिश्रुत्यादौ वायोः स्वेतर विष्ण्वादिचेतनादिसर्वोत्तमत्वस्यानुक्तिलक्षणविरोधादेवेति तस्यार्थः ॥ ननूपक्रमगतप्राणशब्दस्य विष्णुपरत्वेसिद्धे भवेद्विष्णोर्भूमत्वं तदेवकुत इत्यत आह ॥ अनन्तरमन्यमनुक्त्वेति ॥ प्राणानन्तरमन्यमुत्तममनुक्त्वेत्यर्थः एतावत्पर्यन्तं प्राणोवेत्यत्र प्राणशब्दस्यविष्णुपरत्वमंगीकृत्यानुक्तिरूपपादिता अधुना स्वयंप्राणशब्दो वायुपरस्त्वथापि नतस्यभूमत्वं, एवं विजानन्नतिवादीभवतीत्यादिना प्राणज्ञानिनोऽतिवादित्वमुक्त्वा एषतुवेत्यादिना सत्याख्यभूमज्ञानिनस्तुशब्देनविशेषस्योक्तत्वेन ज्ञापकादस्तिभगवः प्राणाद्भूय इति प्राणाद्वावभूयोस्तीति प्रश्नाध्याहारेण विष्णोरेवभूमत्वं सिध्यतीत्यनुक्तिरन्यथोपपन्नेत्याह ॥ अस्तुवेति ॥ एतदर्थद्वयंविरुद्धमिति प्राणशब्दस्य विष्णुवाचकत्वं वायुवाचकत्वमित्यर्थद्वयं विरुद्धमित्यर्थः ॥ अन्तर्यामिविवक्षापि अहंमनुरभवम् इत्यादौ यथा अन्तर्यामिमात्राविवक्षा नतथाप्रकृते किन्तु आत्मन आकाश इत्यादौ चान्तर्यामिणोहरेः भूताकाशादेश्च यथाविवक्षा तथेह ॥ इत्यादिवदिति ॥ तथाच प्राणोवा आशायाभूयानित्यत्र विष्णुवाय्वोरुभयोरपिप्रतिपाद्यत्वेनान्तर्यामिविवक्षयाप्राणशब्दवाच्यस्य भूमत्ववचनं वायुविवक्षयाप्राणशब्दवाच्यादुत्तमत्वेनास्यविष्णोर्भूतत्ववचनमिति नविरोध इत्यर्थः ॥

**॥ ॐ धर्मोपपत्तेश्च ॐ ॥ (१-३-९)**

भाष्यगतसर्वगतत्वादीत्यादिशब्दार्थमाह ॥ स एवाधस्तादित्यादिना ॥ अत्राद्येसूत्रे विष्णोर्भूमत्वे पूर्णसुखत्व सर्वोत्तमत्व रूपहेत्वोः द्वितीये सर्वगतत्वादिरूपहेतोश्चोक्तिरिति सूत्रक्रमः ॥

**३. अक्षराधिकरणम् । ॐ अक्षरमंबरान्तधृतेः ॐ । (१-३-१०)**

अत्राद्येऽधिकरणे प्रकृतेः जीवमात्रादेश्चनिरासः अद्वितीये सर्वश्रेष्ठस्य मुख्यप्राणस्य भूमत्वम् ॥ अत्रतु ततोपिश्रेष्ठस्य श्रीतत्वस्याक्षरत्वनिरास इत्यवान्तरसङ्गतिः ॥ अविनाशित्वरूप-प्रवृत्तिनिमित्तसाधारण्येनोभयत्र प्रसिद्धत्वमाह ॥ अत्राविनाशित्वेति ॥ उपलक्षणंचैतत् ॥ अक्षरशब्दस्य तत्रप्रसिद्धत्वादित्यपिद्रष्टव्यम् ॥ अक्षरशब्दस्ययोगेनोभयत्र प्रसिध्यङ्गीकारेपि यौगिकानन्दमयादिशब्दवदस्यापि नामत्वं नविरुध्यत इत्यभिप्रेत्योक्तम् ॥ अक्षरनाम्नेति ॥ नचतद्वा एतदक्षरमिति वाक्यमेवकुतोनोदाहृतं, समन्वेतव्यशब्दस्य तत्रसत्वादितिवाच्यम् ॥ तत्रादृष्टत्वादिगुणोक्त्यभावेनासंगतत्वापत्तेः ॥ अंबरान्तधृते रित्युक्तहेतोस्तत्रानुक्तत्वाच्चेति भावः ॥ उक्तसाधारण्यमिति ॥ प्रवृत्तिनिमित्तसाधारण्यमित्यर्थः ॥ नन्वक्षरशब्दस्यजडप्रकृतौप्रसिद्धेः तस्याः आकाशस्य च कुतो न संदेहनिवेश इत्यत आह ॥ द्रष्टृत्वादीति ॥ ननु तर्हि उत्तराधिकरणेपि ईक्षणस्योक्तत्वात्तस्य च जडप्रकृतावसंभवात्तत्र कथंतस्याः सन्देहनिवेश इत्यत आह ॥ उत्तराधिकरणेत्विति ॥ प्रथमाप्रतीतेरिति समन्वेतव्यसच्छब्दधर्मिण अग्रह आसीदि-त्युक्तनियतपूर्ववृत्तित्वलक्षणकारणत्वरूप साधारणधर्मप्रतीतिकाल एवेत्यर्थः ॥ लिङ्गमप्याह ॥ एतस्येति ॥ प्रशासने आज्ञायां आज्ञामात्रेण चन्द्रादित्याधारत्वरूपलिङ्गादित्यर्थः ॥ अस्तुचन्द्रादित्याधारत्वं अक्षरस्य तथापिचित्प्रकृतेरक्षरत्वं कुत इत्यत आह ॥ चन्द्रादिति ॥ तस्य च लक्ष्मीसूक्तत्वादिति भावः ॥ तत्रप्रमाणमाह ॥ तथाचेति ॥ ततः किमत आह ॥ तच्चेति ॥ कुत इत्यत आह ॥ तच्चेति ॥ नचमध्यमेति स्वतन्त्राशनाभावेनवाब्रह्म संहर्तृत्वाभावेनवात्तेत्यत्र संहाररूपतयोक्तस्याशनाभावस्य तत्रयुक्तत्वादितिभावः ॥ प्रमाणमाह ॥ तथाचेति ॥ श्रुतिस्थाहनसपदार्थमाह ॥ यज्ञेष्विति ॥ ननु अहंसोममिति वाक्यस्य, सूर्याचन्द्रमसौ विधृतावित्यनेन समानार्थत्वलाभाय सोमशब्देन चन्द्रोयदिग्राह्यस्तर्हि कथं तस्याहनसमिति तस्ययज्ञेष्वभिषूयमाणत्वोक्तिरित्यत आह ॥ लताभिमानत्वेनेति ॥ तत्रदृष्टान्तमाह सोमं राजानमिति ॥ यथासोमं राजानमित्यादौ हूयमान भक्ष्यमाण सोमलताभिमानित्वाच्चन्द्रेभि-

षूयमाणत्वव्यपदेश इत्यर्थः ॥ भाष्योदाहृतश्रुतिभागे अंबरधृतिरेव प्रतीयते नत्वंबरान्तधृतिरित्यतो दिव आदीनां साक्षात्परमात्मनाधृतत्वाभावेपि सर्वाधाराकाशाधारत्वेन सर्वाधारत्वमपि- सिध्यतीत्यभिप्रायेणैतस्मिन्निति भाष्यं व्याचष्टे ॥ इदमक्षरमिति ॥ एकोदेवो बहुधानिविष्ट इत्यस्यशेषभूतं यदाभारं तंद्रयते, सभर्तुं परास्यभारं पुनरस्तमेतीत्यस्य, सपरमात्माभारं जगद्भारं निधायकृत्वातंभारं भर्तुंयदातन्द्रयते तदासौपुनरस्तमेतीत्यन्वयमभिप्रेत्य तदर्थमाह ॥ सचयदेति ॥ ननु भर्तासन्निति श्रुतौविष्णुवाचकपदा- भावात्कथं तस्याः विष्णोः सर्वाधारत्वप्रति- पादकत्वमित्यत आह ॥ एतच्चेति ॥ तस्य ब्रह्मणोविष्णुत्वं प्रागेवसमर्थितमिति भावः ॥ दंसंच विचैधि सर्वमितिश्रुतौ यच्छब्दस्य यतः प्रसूतेत्यादियच्छब्दवत् तदेवब्रह्मपरमं कवीनामित्यु- त्तरवाक्यस्थेन तच्छब्देनान्वय इत्याह ॥ तदेवब्रह्मेत्यर्थ इति ॥ श्रुतावेधीत्यस्यावर्धतेत्यर्थः ॥ तथाचास्या अपिश्रुतेः विवक्षितार्थप्रतिपादकत्वदत्रोदाहरणं युक्तमितिभावः ॥

**॥ ॐ साच प्रशासनात् ॐ ॥ (१-३-११)**

सूत्रभाष्यगत तच्छब्दयच्छब्दयोर्विधृतौतिष्ठत इत्यादिनेत्यादिपदस्य च तात्पर्यमाह ॥ यदासर्वाधारत्वेत्यादिना ॥ अतिसमृद्धेति ॥ सप्तार्धगर्भा इति संहितागताकारस्यार्थोऽतीति ॥ फलितमाह ॥ तदावरणभूता इति ॥ बलप्रदोधृतिहेतुरिति ॥ तथाचप्रकृते तदुदाहरणं युक्तमितिभावः ॥

**॥ ॐ अन्यभावव्यावृत्तेश्च ॐ ॥ (१-३-१२)**

ननु श्रुतौमध्यम इत्यादिकिमर्थमुक्तमित्याशङ्क्य सर्वथ स्थौल्यादिनिषेधेनिःस्वभावत्वं स्यादित्याशंकानिरासार्थमुक्तमित्याह ॥ लौकिकेति ॥ मध्यम इत्याद्युक्तमिति ॥ श्रुतौमध्यमादि- शब्दउपलक्षक इत्यर्थः ॥ तथाचविषयवाक्यगतास्थूलमनण्विति श्रुतावपि प्राकृतस्थौल्यादिनिषेधो नस्थौल्यमात्र निषेध इति नब्रह्मणोनिःस्वभावत्वापत्तिरितिभावः ॥ ननु प्राकृतस्थौ- ल्यादिनिषेधेपि अप्राकृतस्थौल्यादिसद्भाववत् अतमोऽवाय्वित्यादावपि प्राकृततमोवाय्वा- दिनिषेधेप्यप्राकृत तमोवाय्वादिसद्भावः किं नस्यादित्यत आह ॥ तमोवाय्वादीनामिति ॥ यथाऽदुःखमसुखं सममित्यादौ असुखमित्यनेन बाह्यसुखनिषेधेपि अदुःखमित्यनेन दुःखमात्र- निषेधस्तथात्रापीत्यर्थः ॥ अन्यथा श्रुत्यन्तरविरोधः स्यादितिभावः ॥ ननु मध्यमाक्षरस्या- प्राकृतविग्रहत्वात्कथं विष्णोरेवेत्युच्यत इत्यत आह ॥ मध्यमेति ॥ भगवदपेक्षयैवेति ॥ सापेक्षनिरपेक्षयोर्निरपेक्षस्यैव ग्राह्यत्वात् श्रुतेर्निरपेक्षस्थौल्यादिपरत्वे हेतोर्व्यभिचारोनेतिभावः ॥

तर्हि अनशनाभावप्रतिपादकश्रुतेः कागतिरित्यत आह ॥ अनेनैवेति ॥ अप्राकृतविग्रहत्वादि-प्रतिपादनेनैवेत्यर्थः ॥ जीवस्यस्वभावभूतं यदुपजीवनं तदर्थप्रदर्शनमित्यर्थः ॥ अशनव्यतिरेकेण तस्यावस्थानासंभववन्नपरस्याशनमितिभावः ॥ कुत इत्यत आह ॥ अस्थूलत्वादीति ॥ विष्णावेव मुख्यतेति चतुर्विधनाशशून्यत्वादिशब्दप्रवृत्तिनिमित्तस्य तत्रैवपौष्कल्यादिति भावः ॥ अत्राद्ये विषयवाक्यस्थलिङ्गोक्तिः ॥ द्वितीये कैमुत्येनसाधकतयोपेतलिङ्गोक्तिः ॥ तृतीये स्वपरपक्ष साधकबाधक रूपस्यप्राकृतस्थौल्यादिसाहित्यस्योक्तिरिति सूत्रक्रमः ॥

**४. सदधिकरणम् । ॐ ईक्षति कर्म व्यपदेशात्सः ॐ । (१-३-१३)**

सदेवेत्युक्तं सतोविष्णुत्वं नसंभवतीत्यस्य सतः बहुस्यामितिरिणामरूपजडधर्मोक्तेः तस्यचा-न्यभावव्यावृत्तेश्चेति विष्णोरन्यवस्तुस्वभावव्यावृत्तेरुक्तत्वेन विष्णावसंभवादिति पूर्वाधिकरण-सिद्धान्तन्यायमुपजीव्य पूर्वपक्षोत्थानादनंतरसंगतिः ॥ कारणत्व धर्मसाधारण्येनोभयत्र प्रसिद्धत्वमाह ॥ कारणत्वसाम्येनेति ॥ अत्राग्र आसीदिति प्रतीतं महदादिसकलकार्यं प्रतिपूर्ववृत्तित्वरूपं कारणत्वमुभयत्रप्रसिद्धिद्योतकत्वेन तदेवसन्देहबीजत्वे न च विवक्षितम् । नतु तत्तेजोऽसृजतेत्यादिनोक्तं तस्येक्षणादिना सह प्रतीतस्य साधारण्यहेतुत्वाद्यनुपपत्तेः । टीकायां तत्तेजोऽसृजतेत्यादिनेति तु भाष्योक्तस्रष्टृत्वाक्षेपसमर्थनार्थमुक्तामिति भावः । न चात्र सृष्टिस्थानसमन्वयस्य प्रतिपाद्यमानत्वाद् भाष्ये तच्छब्दग्रहणमयुक्तमिति वाच्यम् । सदेवसोम्येदं सदायतनाः सत्प्रतिष्ठा इत्यादिसृष्टिस्थानगतबहुवाक्येषु श्रुतत्वात् तत्समन्वयोक्त्या तद्युक्त-वाक्यानां विष्णुपरत्वसाधनस्थानसमन्वयोप्युक्तो भवतीति ज्ञापयितुं कृतमिति भावः । अविकारस्सदेत्युदाहरिष्यमाणप्रमाणानुसारेण भाष्यगतपरिमाणपदं व्याचष्टे ॥ बहुभावाक्येति ॥ विकारिकारणमेवेति ॥ तदपोऽसृजतेत्यादौ तेजः प्रभृतिभूतानामबादिकं प्रत्युपादनत्वस्यापि विवक्षितत्वादितिभावः ॥ ब्रह्मलक्षणानां श्रवणादिति ॥ समाधिकराहित्यसृष्टृत्वादीनामपि एतद्वाक्योक्तत्वात्तस्य प्रधानपरत्व उक्तब्रह्मलक्षणानामतिव्याप्तिप्रसङ्गेन सिद्धान्तिनोऽनिष्टं स्यादिति तत्समन्वयो वक्तव्य इति भावः । अनेन भाष्ये सृष्टृत्वग्रहणं उपलक्षणत्वेनेत्युक्तं भवति ॥ ईक्षत्याख्यव्यापारेति ॥ अनेन सूत्रोक्तकर्मपदं क्रियापरमित्युक्तं भवति ॥ एतेनेति ॥ विष्णुव्यतिरिक्तचेतनस्य मुखतो द्रष्टृत्वाभावप्रतिपादकश्रुत्युदाहरणेनेत्यर्थः ॥ सोमो वै राजेति ॥ यथा सोमो वै राजा गन्धर्वेष्वासीत्तं देवाश्च ऋषयश्च ध्यायन्नित्यादौ सोमलताभि-मानिचेतनविवक्षयेक्षितृत्वव्यपदेश इत्यर्थः ।

ननु गौणव्यपदेशे गुणयोगनिमित्तं तत्र प्रकृते गुणयोगः कथमित्यत आह सत्वादिति । तथाच ज्ञानोपादानत्वरूपगुणयोगाद्गौणीवृत्तिरुपपन्नेतिभावः । नन्वजायमान इत्यत्राविकारेण बहुत्वं कथमुक्तमत्राह ॥ अविकुर्वाण इति ॥ तथाच तदुदाहरणं न प्रकृतासंगतमिति भावः ॥

५. दहराधिकरणम् । ॐ दहर उत्तरेभ्यः ॐ । (१-३-१४)

सन्प्रतिष्ठा इत्यादिना सद्धर्मतयोक्तसर्वाधारत्वादेरुभेऽस्मिन् द्यावापृथिवीत्यादिना हृत्पद्मे श्रवणात्तस्य विष्णोरन्यत्वे प्रागुक्तं सदप्यन्यदेवस्यात् इति पूर्वाक्षेपेण पूर्वपक्षोत्थानादनन्तरसङ्गतिः । श्रुतिसाधारण्येनोभयत्रप्रसिद्धत्वमाह ॥ अत्र योवेदेति ॥ अथानन्तरं ब्रह्मपुरे शरीरे यदिदं ब्रह्मदहरम् अल्पं पुण्डरीकं वेश्महृत्पद्मं वर्तते । तस्मिन् हृत्पद्मे दहरः अल्पः आकाशोऽस्ति तस्मिन्नाकाशे यदन्तस्तदन्वेष्टव्यम् । वावेति निपातौ तज्जिज्ञासितव्यं विचारणीयमिति गुरुणोक्ते शिष्याः तं चेद्यदिब्रूयुः किं तद्ब्रह्म पुरत आह । तत्र आकाशे किं विद्यतेयदन्वेष्टव्यम् । तथा जिज्ञास्यतया चोच्यत इति शिष्यैरुक्ते तान्प्रति स गुरुर्ब्रूयात् यावान्वाऽयमाकाशस्तावानेष आकाशः हृदये अन्तस्तिष्ठति । अस्मिन्नाकाशे द्यावापृथिव्यन्तरिक्षादिकमित्यर्थः ॥ तत् हृत्पद्मस्थत्वमिति ॥ यद्यत्र तच्छब्देन दहरोऽस्मिन्नन्तराकाश इति वाक्योक्तस्य तस्मिन्यदन्तस्तदन्वेष्टव्यमिति वाक्योक्तस्य वा न परामर्शः । प्रथमेतस्यासिद्धान्तेप्यब्रह्मनिष्ठत्वात् द्वितीये भाष्योक्तस्याकाशशब्दस्य पूर्वपक्षबीजस्याभावादंबरान्तधृत्याक्षेपायोगाच्च । तथापि दहरोऽस्मिन्नन्तराकाशस्तस्मिन्यदन्तस्त दन्वेष्टव्यमित्युक्तस्य साक्षात्परंपरासाधारणहृत्पद्मस्थत्वस्य परामर्श इति नोक्तानुपपत्तिरितिभावः ॥ सर्वाधारतया हृत्पद्मस्थत्वमिति । अत्राक्षराधिकरणोदाहृत श्रुतिस्मृतिबलात् सर्वाधारत्वस्य विष्ण्वेकनिष्ठत्वात्तस्य चात्रश्रवणात् हृत्पद्मस्थत्वं विष्णोरेव किं न स्यादित्याशङ्कायां तस्मिन्सर्वं प्रतिष्ठितमिति समाख्याबलात्तदप्याक्षिप्यत इति प्रदर्शनार्थं सर्वधारतयेत्युक्तमिति द्रष्टव्यम् । हृत्पद्मे दहराकाशस्थितिश्रवणादिति । अनेनभाष्ये दहरोस्मिन्नन्तराकाश इत्यंशोदाहरणस्य युक्तिसूचनं प्रयोजनमितिभावः । सर्वमेतदाकाशशब्दस्य भाष्ये प्रयोगमूलमिति भावः ।

वाक्यान्वयानुपपत्तिमेवदर्शयति ॥ तथाहीत्यादिना ॥ अभिप्रायासङ्गतिरिति ॥ पूर्वान्तरवाक्ययोरसंगतार्थप्रतिपादकत्वेनेवानन्वयः । नत्वन्यथाऽननुकूलविभक्तिकपदादिनेति भावः । नचाकाशपक्षेप्यन्याभावात्कथमाकाशस्यैव हृत्पद्मस्थत्वमुच्यत इत्यत आह ॥ आकाशपक्षेत्वस्त्वन्वय इति ॥ प्रागुक्ताकाशमेव विशिष्येति ॥ द्यावापृथिव्याद्याश्रत्वयोग्यत्वाय

बाह्याकाशतुल्यतया विशिष्येत्यर्थः ।। आकाशाख्योविष्णुः सर्वाधारतयेति ।। तथाचान्वेष्टव्ये इत्थंभावप्रदर्शनार्थः उभे अस्मिन्नित्यादिकं प्रवृत्तमिति तदपि नासङ्गतमिति भावः । नचाकाश-पक्षेऽपहतपाप्मत्वादिकमनुपपन्नमिति वाच्यम् । तस्याचेतनत्वेन पापात्यन्तभावस्य सत्वात् । सत्यकामत्वेतु प्रतिहतकमादिराहित्यात् । यद्वाऽभिमान्यभिमन्यमानाभिप्रायेणैतदिति न कोऽपि दोष इति भावः । इतरपरामर्शादिति सूत्रनिरस्यपूर्वपक्षमाह ।। जीवस्यैतदिति ।। तत्र युक्तिमाह ।। उत्तरत्रेति ।। इति वाक्यस्यैतच्छब्देन प्रकृतं जीवमनूद्येति शेषः । हृत्पद्मस्यात्मतया परामर्शात् हृत्पद्मस्थात्मविधानादित्यर्थः । जीवलिङ्गाच्च जीव एव हृत्पद्मस्थ इत्याह ।। दहरस्थत्वलिङ्गा-च्चेति । चेतनत्वादस्ति प्राप्तिरितिचेत् न जातीये जीवेपापादेर्दर्शनादिति भावः ।। अनेनेति ।। नित्यतीर्णाशनायादिरित्यनेनेत्यर्थः ।

**।। ॐ गतिशब्दाभ्यां तथाहि दृष्टं लिङ्गञ्च ॐ ।।** (१-३-१५)

गच्छन्त्य इति स्त्रीलिङ्गाभिप्रायमाह ।। सुप्रजेति ।। हृत्पद्मस्य ब्रह्मलोकत्वोक्त्येति ।। एतं ब्रह्मलोकमिति ब्रह्मलोकत्वोक्त्येत्यर्थः ।। सर्वाश्रयत्वादिना लोकपदोक्तं वेति ।। अनेन पूर्ववत् पद्मप्राप्तिद्वारातन्निष्ठभगवतः सुप्तप्राप्यत्वं किन्तु साक्षादेवेत्युक्तं भवति । अत्रादिपदेन प्रकाशरूपत्वादिकं ग्राह्यम् । हृत्पद्मस्थस्यारण्याख्यसुधासमुद्राश्रयलोकवत्वलाभाय ब्रह्मलोक-शब्दश्रवणादेवेत्यादिवक्ष्यमाणाभिप्रायेण हृत्पद्मस्य ब्रह्मलोकत्वोक्त्येति प्राचीनव्याख्यान-मित्यवधेयम् ।। तस्येति ।। अरण्याश्रयलोकत्वस्येत्यर्थः ।। हिशब्दाभिप्रायमाहेति ।। अत एव भाष्ये लिङ्गं च तथादृष्टमित्यत्र हीत्यनुक्त्वा तस्यैवहि तल्लक्षणत्वेनोच्यत इत्यत्र हिशब्दो योजित इति भावः । अनेनेति ।। अरण्याश्रयलोकत्वस्य विष्णुलोकलिङ्गत्वप्रतिपादकप्रमाणो-दाहरणेनेत्यर्थः । नन्वरश्चेत्यत्रापि तत्रेत्येतत्सप्तलोकपरम् । तथाच कथं तेन प्रमाणेन ब्रह्मलोकशब्दस्य सत्यलोकपरत्वशङ्कानिरास इत्यत आह । ।। क्षीराब्धिमध्य इति ।। तत्प्रसङ्गात् विष्णुप्रकरणात् । एतत्पूर्ववाक्येक्षीरब्धिमध्य इत्युक्तत्वेन विष्णुप्रकरणत्वान्नतत्रेत्यस्य सत्यलोकपरत्वमिति भावः ।। एतद्हृत्पद्मस्थविषयमिति ।। अहरहर्गच्छंत्य एतं ब्रह्मलोकं न विंदन्तीत्यस्यानन्तरं स एष आत्मा हृदीतिश्रवणादिति भावः ।। ब्रह्मलोकशब्दश्रवणादेवेति । हृत्पद्मस्थस्यावासत्वेन तल्लोके हृत्पद्मे एवेतं पद्मलोकमिति प्रयुक्तस्य ब्रह्मशब्दस्थारण्या-श्रयलोकेऽपि श्रवणादित्यर्थः । अनेन सूत्रे गतिशब्दलिङ्गैरित्यनुक्त्वा लिङ्गं किमर्थमुक्तमित्यपास्तम् । गतिशब्दो यो हृत्पद्मनिष्ठतया प्रसिद्धत्वेन लिङ्गस्योक्तरीत्या

साध्यत्वेन पृथगुक्तेरितिभावः । पूर्वं हृत्पद्मस्थस्य विष्णुत्वे हेत्वन्तरोक्त्यर्थं सौत्रं लिङ्गपद-मित्येवपरतया अरश्चेत्यादिभाष्यं व्यख्यातम् । अधुना ब्रह्मलोकशब्दस्य प्रसिध्या सत्यलोकपरत्वशङ्कानिरासार्थं हृत्पद्मान्तर्गतो विष्णुः हृत्पद्मस्य विष्णुलोकत्वात् । तस्य विष्णुलोकत्वं कुत इति चेत् । तत्र ब्रह्मलोकशब्दस्य प्रयुक्तत्वात् । ततः किमितिचेत् । ब्रह्मलोकशब्दस्य विष्णुलोकवाचकत्वात् । तदपिकुतः । विष्णुलोकलिङ्गस्यारण्याश्रयत्वस्य ब्रह्मलोके प्रयुक्तत्वादित्येवपरतया अरश्चेत्यादिभाष्यं व्याचष्टे ।। अथवाब्रह्मलोकमिति ।। अनेन सूत्रेलिङ्गश्चेत्युक्तलिङ्गं न केवलं गतिशब्दवत् हृत्पद्मस्थस्य विष्णुत्वसाधकं किन्तु हृत्पद्मे प्रयुक्तब्रह्मलोकपदोक्तस्य विष्णुलोकसाधकत्वेन हृत्पद्मस्थस्य विष्णुत्वसाधकब्रह्मशब्दाख्य-हेतुसाधकमपि इत्येतृपृथक्त्वोक्तमिति तस्य पृथग्वचने प्रयोजनान्तरमपि सूचितम् ।। अरश्चेतीति ।। अरश्चहवैण्यश्चार्णवौ ब्रह्मलोक इति वाक्य इत्यर्थः ।। अत्रापीति ।। एतं ब्रह्मलोकं नविन्दन्तीत्यत्रापीत्यर्थः । तत्परत्वमिति । ब्रह्मलोकपदस्य विष्णुलोकपरत्वमित्यर्थः ।। तस्येति ।। अरण्याख्यसमुद्राश्रयत्वस्येत्यर्थः ।।

**।। ॐ धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॐ ।। (१-३-१६)**

पौनरुक्त्यपरिहारार्थमाह । धारणसमर्थाश्रय इति । धारणसामर्थ्यस्याश्रयत्वसंभावकत्वाद्वै-परीत्येन पदान्वयः कृत इत्यवधेयम् ।

ननुहृदय आत्मेति वाक्ये आत्मशब्दोक्तेन हृत्पद्मस्थ इत्याशङ्क्यनिषेधति ।। नच वाच्यमिति ।। य आत्मेति इति यः पूर्वोक्तः आत्मा ससेतुरित्यर्थः । किञ्चैष आत्माऽपहतपाप्मेत्यत्र हृत्पद्मस्थलक्षणत्वेनोक्तस्यापहतपाप्मत्वस्य सर्वे पाप्मनोऽतिनिवर्तन्त इत्यनेन य आत्मा ससेतुर्विधृतिरित्युक्तसर्वाधारकर्मत्वोक्तेरयं पद्मस्थ इत्याह ।। सर्वे पाप्मनोऽतिनिवर्तन्त इति तल्लक्षणत्वोक्तेश्चेति ।। तल्लक्षणोक्तिरितिपाठे हृत्पद्मस्थलक्षणस्यापहतपाप्मत्वस्य ससेतुरिति सेतुतयोक्ते परमात्मन्युक्तेरित्यर्थः । अनेनास्य हृत्पद्मस्थस्य महिम्नोऽपहतपाप्मत्वस्या-स्मिन्सेतुतयोक्ते उपलब्धेरिति सूत्रांशः प्रकारान्तरेण योजितः । एषभूताधिपतिरिति भाष्योदाहृतवाक्ये हृत्पद्मस्थत्वाप्रतिपादनात्कथं समाख्यायापीत्युक्तमित्यतः समाख्यावाक्यरूप तत्पूर्ववाक्यमुदाहृत्य तद्योजयति ।। वाजसनेयक इत्यादिना ।। तर्हि भाष्ये तदुदाहरणं किमर्थमित्यत एतत् श्रुत्युक्तस्य विष्णुत्वे निश्चिते स्यादस्याः समाख्यात्वं तदेव कुत इत्याशङ्कानिवर्तये महिम्न इत्यादि सूत्रोक्तहेतुविवरणार्थं तदितिभावेनाह ।। नच वाच्यमिति ।।

वाजसनेयोक्त इत्यर्थः । एषभूतपाल इत्यद्यस्येति भाष्ये इत्यादीत्यविभक्तिकोनिर्देशः । विभक्तिश्चेत्यादेर्महिम्न वा इत्यादिवाक्येनेति वा इत्याद्युपलब्धेरिति क्रियाविशेषणं वा इत्यादिश्रुतिभ्यस्तस्य ह्येषम्नेतदेत वाक्षरस्य प्रशासन इत्यतः परमप्यनुकृष्य योज्यमित्यभिप्रेत्यै-तस्मिन्खल्वक्षर इत्यादिवाक्यद्वयमवतारयति ॥ यदुक्तं हृत्पद्मस्येति ॥ आकाश ओतश्चप्रोतश्चेत्यन्तोदाहरणवत् एतस्य वाक्षरस्य प्रशासन इत्येतच्छेषोऽपि कुतो नोदाहृत इत्यत आह ॥ एतस्येति ॥ प्रतीकग्रहणेनेति ॥ प्रतीकग्रहणेनैतस्य वाक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ एतस्य वाक्षरस्य प्रशासने गार्गि द्यावापृथिव्यावित्यादि बहुवाक्यानि सूचयतीत्यर्थः। शेषोदाहरणे तु उदाहृतशेषयुक्तमेव वाक्यं गृहीतमिति ज्ञायेतेति भावः ।

**॥ ॐ प्रसिद्धेश्च ॐ ॥ (१-३-१७)**

॥ विश्वमचेतनमिति ॥ आत्मेश्वरमितिचेतनेश्वरत्वस्य पृथगुक्तत्वादिति भावः । भाष्योदाहृते तत्रापीति श्रुत्यंशे हृत्पद्मस्थत्वं न प्रतीयत इत्यतस्तत्पूर्वांशोदाहरणपूर्वकं तद्व्याचष्टे ॥ दहरं विपापमिति ॥ अस्यायमर्थः । यदेतत्पुंडरीकमष्ठदलं हृदयकमलमस्ति कीदृशं दहरं अल्पं विपापं शुद्धं शरीरसंबंधिदोषरपरामृष्टत्वात् । परस्यात्मनो वेश्मभूतं गृहभूतं सर्वदा तत्रोपलभ्यमानत्वात् । पुरस्य शरीरस्य मध्ये संस्थितं राज्ञ इव पुरमध्य इव प्रसादस्तत्रापि हृत्पुण्डरीके दहरं सूक्ष्मं गगनं अस्ति तस्मिन्गगने यदन्तः विशोकः विशोकं ब्रह्मास्मि तदुपासितव्यमिति विष्णुरित्यभ्युपगमे सुषिरश्रुतिविरोध इति ब्रह्मणो हृत्पद्मस्थत्वे सुषिरस्य तस्यान्तेसुषिरमिति हृत्पद्मस्थत्वश्रुतिविरोध इति निरस्तम् । सुषिरस्य दहरोऽस्मिन्नन्तराकाश इति वाक्योक्तहृत्पद्मस्थत्वमुपेयमेव । ब्रह्मणो दहरं विपापमित्यादिश्रुतिबलात् । तस्मिन्यदन्तरिति वाक्योक्तहृत्पद्मस्थसुषिरस्थताया एव स्वीकारादित्यर्थः । विष्णोः हृत्पद्मगताकाशगतत्वे हृत्पद्ममस्ति तत्र अविद्यमाने व्योम्नि एष आत्मा प्रतिष्ठितः हृदये अन्तरेष आकाशः तस्मिन्नाकाशे एष अयं पुरुषस्तिष्ठतीत्यर्थः । भाष्योदाहृतश्रुत्यपेक्षया स्वोदाहृतश्रुतिस्थात्मपुरुषपदयुक्तत्वेनस्पष्टमिति भावः । ननु तर्हि विष्णुपक्षेऽनन्वयः प्रसज्यत इत्यत आह ॥ अन्वयाभाव इति ॥ ननु तस्मिन्यदंतरित्यत्र ब्रह्मणोऽप्रकृतत्वात् कथं ब्रह्मान्वेष्टव्यमिति तदर्थः क्रियत इत्यत आह ॥ ब्रह्मपुरपदेनैवेति । ब्रह्मपुरपदेनैव ब्रह्मप्रकृतमितिभावः । तथाच तस्मिन्यदन्तस्तदुपासितव्यमित्यत्र यच्छब्दतच्छब्द-प्रथमान्तयोः प्रकृतब्रह्मपरत्वे ब्रह्मैवान्वेष्टव्यतयोक्तं भवतीति भावः ॥ तदाधारतयेति ॥ तदाधारपृथिव्यादिकंचेति आकाशाभिमान्याश्रितपृथिव्याद्यभिमान्यादिकमित्यर्थः । ब्रह्मनिष्ठा-काशाधारतयेत्यर्थः ।

ननु शरीरस्थस्य तन्नाशे नाशः प्रसज्यत इत्यत आह । नष्टेपीति ।। तस्य पापादिमत्वे पृथिव्याद्याधारत्वं तस्मिन् कथं घटते कथं तस्यापाप्मत्वमित्यत आह ।। अपहतेति । अनेन जीवब्रह्मपक्षयोः साम्यपरिहाराय जीवपक्षेप्यन्यथाभावः सूचितः ।

अपहतपाप्मत्वादीनां कथंचित्संभवेऽपि देहनाशस्यैव जीवनाशव्यवहारविषयत्वेनास्य कथमप्यसंभवादिति भावः । अनन्वयं प्रकारान्तरेण परिहरति । अथवेति ।। सामान्येनोक्त इति ।। अस्मिन्पक्षे यावान्वा इत्यादिना ब्रह्मैव वर्तत इत्युक्तत्वात्किं तदत्रच विद्यत इति प्रश्नवाक्ये कीदृशमिति विवक्षाभावात्पूर्वं ब्रह्मज्ञातव्यमिति च नियम इति भावः । हृदयपद्माकाशे विद्यत इति श्रुतावन्तर्हृदय इति सप्तम्यन्तपदं हृद्गताकाशो हृदयशब्देनोऽच्यते हृत्पद्मगतकाशपरमित्युक्तं भवति । न चेतत्सत्यं ब्रह्मपुरमिति ब्रह्मपुरशब्देन प्रकृतस्य शरीरस्यैव एष आत्मेति परामर्शादात्मनि विष्णुरित्याशंक्य निषेधति ।। न च ब्रह्मपुरेति ।। उत्तरमाह । ब्रह्मैव पूर्णत्वादिति ।। छान्दोग्यभाष्योक्तरीत्या यदिदमस्मिन्ब्रह्मपुर इत्याद्यस्य ब्रह्मपुरशब्दस्य षष्ठीतत्पुरुषकर्मधारययोराश्रयणेन शरीरब्रह्मोभयपरत्वेऽपि ब्रह्मपुरे सर्वं समाहितमिति द्वितीयस्य एतत्सत्यं ब्रह्मपुरमिति तृतीयस्य च ब्रह्ममात्रपरत्वादिति भावः । नन्वेतज्जरावाप्नोतीति पूर्वमेतच्छब्देन शरीरस्य प्रकृतत्वादेतत्सत्यं ब्रह्मपुरमित्यत्राप्यशरीरस्यैव प्राप्तिरित्याशयेन शङ्कते ।। एतच्छब्देनेति ।। शरीरनाशेनास्य विनाशोक्तिरिति । नास्य जरयैतज्जीर्यत इति सन्निहितपूर्ववाक्ये शरीरमस्येति निर्दिश्य एतच्छब्देन ब्रह्मनिर्देश अनाशेप्यविनाशित्वलिङ्गाच्च न शरीरमिह ब्रह्मपुरशब्दार्थ इत्यर्थः । यद्वा ब्रह्मपुरपदप्रयोगादिति । य आत्मा अपहतपाप्मेति वाक्यसन्निधौ एतत्सत्यं ब्रह्मपुरमितीत्यर्थः । तच्छब्देन शरीरस्येति । अथ यदिदमस्मिन्ब्रह्मपुर इत्यत्र ब्रह्मपुरशब्देनेत्यर्थः। तत्र ब्रह्मपुर शब्दस्य शरीरपत्वं दहरपुंडरीकाधिकरणत्वेन निश्चितमिति भावः । शरीरनाशेनाप्यस्य विनाशोक्तिरिति अस्यैतत्सत्यं ब्रह्मपुरमित्युक्तस्येत्यर्थः । आकाशपक्षेऽनन्वयमुपपादयति ।। न चेति ।। तदभावादिति ।। व्याप्ताकाशस्य दहराकाशस्थत्वाभावादित्यर्थः ।। योगाच्चेति ।। ईश्वरवदचिन्त्यशक्त्यभावेन व्याप्ताकाशस्य दहराकाशे अवस्थानायोगाच्चेत्यर्थः ।। दहराकाशमेवविशिष्येति ।। द्यावापृथिव्याद्याश्रयत्वयोग्यत्वाय बाह्याकाशतुल्यत्वादिना विशिष्येत्यर्थः ।

किञ्च तथात्वे दहराकाशस्थस्य पृथिव्यादेरन्वेष्टव्यत्वं च वक्तव्यम् । न च तत्संभवतीत्याह ।। मुख्यत इति ।। पृथिव्याद्यभिमानिदेवानां विष्णुशेषत्वेनोपास्यत्वान्नमुख्यमुपास्यत्वमिति भावः । न चैवमङ्गीकारे सुषिरश्रुतिविरोध इति । सुषिरस्य सर्वाधारत्वप्रतिपादकश्रुतिविरोध इत्यर्थः ।

॥ ॐ इतरपरामर्शात्स इति चेन्नासम्भवात् ॐ ॥ (१-३-१८)

हृत्पद्मस्थात्मतयेति ॥ य आत्मऽपहतपाप्मेति हृत्पद्मस्थे पूर्वमात्मशब्दप्रयोगादत्राप्यात्म-शब्देनास्यैवाभिधानादिति भावः ॥ तदसंभवादिति ॥ स्वातन्त्रेणापहतपाप्मत्वाद्यसंभवादित्यर्थः।

॥ ॐ उत्तराच्चेदाविर्भूतस्वरूपस्तु ॐ ॥ (१-३-१९)

स तत्र पर्येतीत्यादिना जीवस्य सत्यकामत्वसिद्धावप्यपहतपाप्मत्वादेः कथं जीवनिष्ठत्वमित्यत उक्तम् ॥ तत एव विशोकत्वादीति ॥ तद्वाक्यस्य मुक्तपरत्वं कुत इत्यत आह ॥ स्वेनरुपेणेति ॥ स्वरूपाविर्भावस्य तत्रोक्तत्वात् वाक्यं मुक्तपरमितिभावः । अस्तु तथापि हृत्पद्मस्थत्वं जीवस्येत्यत्र किमागतमित्यत आह ॥ हृत्पद्मस्थस्येति ॥ तथाच हृत्पद्मगतत्वापहत-पाप्मत्वाभिन्नकालीनत्वेन जीवस्य हृत्पद्मगतत्वेऽपहतपाप्मत्वाद्यसंभव इति भावः ॥ मुक्तस्यापि जीवत्वेनेति ॥ भिन्नकालीनत्वेऽपि हृत्पद्मस्थत्वापहतपाप्मत्वयोः समानाधिकरण्यस्य सत्वान्नानुपत्तिरिति भावः ॥ भाविभावेनेति ॥ अपहृतपाप्मत्वादि गुणत्वाद्यपि प्रायेणोक्तं तद्गुणाविर्भावेनेति । स्वरूपाविर्भावस्येश्वरप्रसादयत्तप्रतिपादनं प्रकृतानुपयुक्तमित्याविर्भूतस्वरूप-मित्येतदेवं व्याख्यातमित्यवधेयम् ॥ गुणप्रदातृतयेति ॥ तस्य स तत्र पर्येतीत्युक्तगुण-प्रदातृत्वाभावे तत्प्राप्तिकथनमनुपपन्नमिति भावः । ॥ पूर्ववाक्योक्तत्वादिति ॥ य आत्माऽप-हतपाप्मेति पूर्ववाक्य इत्यर्थः ॥ दातुरेवमुख्यत्वादिति ॥ अनेन यत्प्रसादान्मुक्तोभवतीत्यस्य भगवत एव पूर्ववाक्योक्तत्वेनियामक प्रतिपादनरूपप्रयोजनमुक्तं भवति । यत्प्रसादादितिवाक्यस्य द्वितीयव्याख्यनाभावे मुख्यामुख्ययोर्मुख्यस्यैव ग्राह्यत्वादित्यस्यावचनादन्यार्थश्चपरामर्श इति सूत्रनिवर्तनीयायाः परामर्शबलादमुख्यापहतपाप्मत्वादेरपि जीवे य आत्मेतिवाक्ये प्रतिपाद्यत इति शङ्काया उदयो नस्यादित्यतस्तदुदयार्थमिदं व्याख्यानमिति भावः ।

॥ ॐ अन्यार्थश्चपरामर्शः ॐ ॥ (१-३-२०)

यत्परंज्योतिराख्यमित्यनेन परंज्योतिरित्यत्र लिङ्गमविवक्षितमित्युक्तं भवति । परामर्शस्य चेत्यनेन सूत्रगत चशब्दस्य परामर्शश्चेत्यन्वय उक्तो भवति । एवं सति न केवलमसंभवादिति बाधकं परामर्शलक्षणसाधकाभावश्चेति चशब्दः सार्थकः ।

॥ ॐ अल्पश्रुतेरिति चेत्तदुक्तम् ॐ ॥ (१-३-२१)

नन्वर्भकौकस्त्वादित्यनेनैव ज्ञातुं शक्यत्वात्किमर्थं तत्स्मरणमित्यतोऽभ्यधिशङ्काप्रदर्शनपूर्वकं तद्भाष्यमवतार्य व्याचष्टे ॥ न व्योमवदित्यादिना ॥ अत्राद्यसूत्रेऽपहतपाप्मत्वादिलिङ्ग-

रूपसाधकोक्तिः । द्वितीये तदुत्तरवाक्यगतसूत्रप्रजाप्राप्यत्वलिङ्गब्रह्मशब्द अरण्याख्यसुधासमुद्रा-श्रयलिङ्गानां चोक्तिः । अत्रारश्चहवैण्यश्चेति वाक्यस्याथ उ य आत्मेति वाक्यादुत्तरत्वेऽपि एतं ब्रह्मलोकमिति पूर्ववाक्योक्तहेतुसाधकहेतुप्रतिपादकत्वादत्रैव तदुक्तलिङ्गोक्तिः । तृतीये सर्वाधारत्वलिङ्गस्य वाजसनेयकसमाख्यायाश्चोक्तिः । हृत्पद्मस्थो विष्णुः ससेतुरिति सर्वाधारत्वस्योक्तत्वात् । किं च वाजसनेयकसमाख्यानाच्च विष्णुरेव हृत्पद्मस्थः । वाजसनेयके हृत्पद्मस्थस्य विष्णुत्वं कुत इति चेत् । अस्य विष्णोः सर्वेश्वरत्वादिमहिम्नः अस्मिन् वाजसनेयकोक्ते हृत्पद्मस्थे उपलब्धेश्चेति चशब्दोभिन्नक्रमः । तथाच तत्र हृत्पद्मस्थस्य विष्णुत्वेन तत्समाख्यानादत्रापि हृत्पद्मस्थो विष्णुरेवेति वाक्याक्षरार्थः । चतुर्थे प्रसिद्धिरूपसाधको-क्तिपूर्वकसुषिरश्रुति विरोधपरिहारस्योपलक्षणतयान्वयाभावलक्षणबाधकोद्धारस्याकाशपक्षेऽन्वया भावरूपपरपक्षबाधकस्य च सूचनात् । सर्वसाधकोक्त्यनन्तरं तदुक्तिः । पञ्चमेजीवपक्षे बाधकोक्तिः । षष्ठेऽसंभवरूपबाधकस्यासिद्धिमाशङ्क्य तदुद्धारः । सप्तमे परामर्शस्य विष्णुविषयत्वसमर्थनम् । अष्टमे हृत्पद्मस्थस्य विष्णुत्वेबाधकस्याल्पस्थानस्थितत्वस्य पूर्वोक्तयुक्तिस्मरणेन विशेषप्रमाणोपन्यासेन च विष्णौ सावकाशत्वोक्तिरिति सूत्रक्रमः ।

**६. अनुकृत्यधिकरणम् । ॐ अनुकृतेस्तस्य च ॐ । (१-३-२२)**

उभयत्र प्रसिद्धशब्दसाहचर्येणोभयत्र प्रसिद्धिमाह ॥ सुखशब्दवृत्यासाधारणस्येति ॥ यो वै भूमातत्सुखमित्यादौ भगवति सुखशब्दवृत्तिर्ज्ञेया । अत्र पूर्वाधिकरणन्यायेन तद्वैषम्येण वा पूर्वपक्षोत्थानादनन्तरसंगतिः ॥ तदेतदिति ॥ यत्तत्सुखमनिर्देष्टुमशक्यं परमप्रकृष्टं प्राकृतवाङ्मनसयोरगोचरं एवं भूतं तत्प्रत्यक्षमिति ये ब्राह्मणा मन्यन्ते तत्कथं नु विजानीयां इदमित्यात्मबुद्धिविषयमापादयेयं तत्किं भाति दीप्यते प्रकाशात्मकं तद्यतोऽस्मद्बुद्धिगोचरत्वेन विभाति स्पष्टं दृश्यते । किं वा नेतीति वा वाक्यार्थः ।

ननु उदाहृतवाक्ये आनुकूल्येन गृह्यमाणं न प्रतीयत इत्यत आह ॥ आनुकूल्येनेति ॥ न चानेन ज्ञानार्थं प्रार्थनं प्रतीयत इति वाच्यम् । विजानीयामिति लिङा ज्ञानार्थं ज्ञेयस्य प्रार्थनाधीरित्यभिप्रेत्य कथं नु पुत्र पश्येयं स आगच्छति वा न वेत्यत्र यथा पुत्रज्ञानार्थं तदागमनप्रार्थनाधीः तथा कथं नु तद्विजानीयामिति वाक्ये ज्ञानार्थमाविर्भावरूप-मानप्रार्थनाधीरित्यभिप्रेत्योक्तमिति भावः । एकः स्वगतभेदरहितः । वशी सर्वमस्य वशे वर्तत इति वशी । सर्वभूतान्तरात्मा सर्वभूतान्तर्यामीयः । एकं रूपं बहुधा करोत्यवतारादिना

तमात्मस्थं येधीराः अनुपश्यन्ति तेषां शाश्वतं सुखं नेतरेषामित्यर्थः । न च समग्रवाक्योदाहरणं किमर्थमितिवाच्यम् । भाष्योदाहृत श्रुतिगतस्य ज्ञानिपरत्वज्ञापनार्थं तमात्मस्थमित्यं-शस्तावदुदाहर्तव्यः । तथाच तद्गततच्छब्दार्थज्ञापनार्थं एको वशीत्यादि तत्पूर्वभागोप्युदाहृत इति ज्ञातव्यम् ॥ नपुंसकसुखशब्देनेति ॥ नपुंसकलिङ्गशब्देन सुखशब्देनचेत्यर्थः ॥ तदित्यादीति ॥ आदिशब्देन सुखशब्दादिग्रहणम् । तथाच पूर्वं परमात्मनो नपुंसकशब्देनाप्राकृत-त्वात्तदित्यादिशब्देः सुखशब्देनाप्रकृतत्वात्परमं सुखमिति सुखशब्देन परामर्शायोगादित्यर्थः ।

किञ्च समीपोक्तपरामर्शे संभवति दूरस्थपरामर्शस्यान्यय्यत्वात्समीपोक्तज्ञानिसुखस्यैवात्र परामर्श इत्याह ॥ संभवादिति ॥ अनुकृतेरिति सूत्रे आनंदमयोभ्यासादित्यादाविव समन्वेतव्य शब्दादेर्विष्णुपरत्व एव हेतुनोच्यते किन्तु अनिर्देश्यसुखमित्यत्र अवहितपरमात्मग्रहणे समीपोक्तज्ञानिसुखपरित्यागेच हेतुरुच्यत इत्यभिप्रेत्य भाष्ये परमात्मा वाऽनिर्देश्यसुखरूप इत्युक्तमित्यभिप्रेत्य प्रधानसाध्यादि प्रदर्शनपूर्वकं भाष्यं व्याचष्टे ॥ कथं नु तदित्यादिना ॥ परमं सुखमिति सुखश्रुतेरिति ॥ तेषां सुखमिति वाक्यगतसुखश्रुतिव्यावर्तनाय परमं सुखमित्युक्तम् ॥ तस्येति ॥ तस्य भासेतिवाक्यं प्रतीकग्रहणमिति ज्ञापयितुं भाष्ये वचनादित्युक्तम् । नहि ज्ञानिसुखमिति भाष्ये सर्वशब्दः प्रकाश्यघटादि- साधारणो नसंभवतीत्यतस्तेजः परहत्याह ॥ सर्वं सूर्यादीति ॥ सर्वशब्दस्य तेजःपरत्वेन व्याख्यातत्वादनुशब्दसमभिव्याहृतस्य भातीत्यस्य भासयतीत्यर्थत्वात्सत्वं भातीत्यस्य न च तद्भासेत्यसंभवात् जगद्भातीतिपदद्वयमध्याहार्यमित्याह ॥ जगद्भातीतिशेष इति । अहं तत्तेजो रश्मीदिति भाष्यं उक्तलिङ्गद्वयस्य विष्णुनिष्ठ-त्वप्रतिपादकत्वेन व्याचष्टे ॥ रश्मीदिति ॥ सूर्यादितेजसामिति ॥ अग्नीच्छब्द-स्याग्निसमिंधकत्वमिव रश्मीच्छब्दस्य रश्मिसमिन्धकत्वमर्थ इति भावः । नारायणाभासेति भाष्यस्य सूर्यादितेजसां नारायणाधीनप्रकाशकत्वं नारायणस्य सर्वजगत्प्रकाशकत्वं चार्थ इति अभिप्रेत्य तदनुगुणतया नारायणभासेतिपदं सर्वपदं भातीति पदंचार्थद्वयपरतया व्याचष्टे ॥ तदधीनभासेत्यादिना ॥

**॥ अपि स्मर्यते ॐ ॥ (१-३-२३)**

नन्वेतत्स्मृतौ लिङ्गद्वयस्य विष्णुनिष्ठत्वं कथमुक्तमित्यतः स्मृतिगतमायिकपदार्थमाह ॥ या प्रकृतिमिति ॥ युक्तिसमुच्चयेऽपिपदमिति ॥ यद्यप्याद्यव्याख्याने सौत्रेऽपिशब्दः आद्ये सूत्रे आनुकूल्येन गृह्यमाणस्य ब्रह्मत्वरुपप्रधानसाध्ये हेतूकृतानुकृत्यादेर्ब्रह्मधर्मत्वं साधकश्रुति-

समुच्चयार्थः । तथापि द्वितीयव्याख्याने प्रधानसाध्य एव हेतोः सूर्याद्यप्रकाशत्वरूपयुक्तेः समुच्चयार्थः इत्यर्थः ॥ न तत्र सूर्य इति ॥ तमेवभान्तमित्यत्र तमिति पुल्लिङ्गशब्देन परमात्मेवोच्यते तदेकार्थत्वाय न तत्र सूर्यो भातीति वाक्यस्थेन तत्रेत्यनेन परमात्मैवोच्यत इत्यर्थः । किमु भातीति ॥ तत्रोक्तदुर्ज्ञेयत्वस्य न तत्र सूर्योभातीत्यादिना प्रत्यभिज्ञायमानत्वादित्यर्थः ॥ यस्यैवमिति ॥ तथाच न तत्रेत्यत्रानुकूल्येन गृह्यमाणग्रहणेन लिङ्गानुपपत्तिरिति भावः ॥ दूरोक्तग्रहण इति ॥ तदेतदित्यस्मिन्वाक्ये ज्ञानसुखापेक्षया दूरोक्तपरमात्मग्रहणे विभ्यतस्ततोप्युत्तरस्मिन्नतत्रेत्यत्र वाक्यद्वयव्यवहितचेतनश्चेतनानामिति वाक्योक्तपरमात्मग्रहणेच कथं न भीतिरित्यर्थः । न तत्रेत्यत्र विष्णुमात्रनिष्ठत्वे सूर्याद्यप्रकाशत्वलिङ्गबलाद्दूरोक्त परमात्मपरामर्श इति यदि तर्हि तदेतदिति वाक्येऽपि विष्णुमात्रनिष्ठत्वेन साधितानिर्देश्यत्व लिङ्गबलात्परमात्मन एव परामर्श इति भावेनाह ॥ अनिर्देश्यत्वाद्ययोगाच्चेति ॥ अत्राद्ये सूत्रे लिङ्गरूपसाधकोक्तिः । द्वितीये पूर्वोक्तलिङ्गद्वयस्य न तत्रेत्युक्तसूर्याद्यप्रकाश्यत्वरूपलिङ्गान्तरस्य च विष्णुमात्रनिष्ठत्वे स्मृतिरूपप्रमाणोक्तिरिति सूत्रक्रमः । आनुकूल्येन गृह्यमाणो विष्णुरेव अनुकृतेः सूर्यादिप्रकाशानां भगवत्प्रकाश्यत्ववचनाच्चेत्याद्यसूत्राक्षरार्थः । द्वितीयसूत्रस्याद्यव्याख्याने चशब्दः सूर्याद्यप्रकाशसमुच्चयार्थः । द्वितीये त्वेतदुक्तलिङ्गद्वयपरस्यैव समुच्चायकः ॥

**७. वामनाधिकरणम् ॥ ॐ शब्दादेव प्रमितः ॐ ॥ (१-३-२४)**

तमात्मस्थं येनु पश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषामिति पूर्वत्र विष्णुज्ञानादेव मोक्ष इत्युक्तम् । तदयुक्तम् । विश्वे देवा उपासत इत्यस्यैव देवोपास्यत्वप्रतीतेः प्राप्तसमस्तैश्वर्याणां च देवानां मोक्षादन्यार्थमुपासनायोगादन्योपासनया च विष्णुज्ञानायोगादिति पूर्वाक्षेपेण पूर्वपक्षोत्थानादनन्तरसङ्गतिः । प्रवृत्तिनिमित्तसाधारण्येनोभयत्र प्रसिद्धिमाह ॥ अत्र प्रेरकत्वसाम्येनेति ॥ अङ्गुष्ठमात्रः अङ्गुष्ठपरिमाणः । आत्मनि मध्ये हृदयमध्ये पुरुषस्तिष्ठति । भूते भव्यस्य अतीतानागतस्य ईशानः प्रेरकः । ननु जिज्ञासासूत्रे जिज्ञास्यत्वमेवोक्तं न तूपास्यत्वम् । अत्र तूपास्यत्वमुच्यत इति कथं तदाक्षेप इत्यत आह ॥ जिज्ञासेति ॥ कथं तयोरैक्यमित्यतो लक्षणैक्यादित्याह ॥ श्रवणादिरूपेति ॥

नन्वीशानशब्दस्य रुद्रेपि प्रसिद्धत्वात्सोऽपि किमिति न संदेहकोटौ निवेश्य इत्यत आह ॥ ईशानशब्दस्येति ॥ उपलक्षणं चैतत् ॥ ईशानशब्दप्रवृत्तिनिमित्तप्रेरकत्वस्य रुद्रादौ साम्येपीत्यपि

द्रष्टव्यम् । ऊर्ध्वं प्राणमुन्नयतीति श्रुतौ अन्वयाप्रतीतेर्यत्तच्छब्दावध्याहृत्यान्वयमाह ॥ य उन्नयतितमित्यन्वय इति ॥ ऊर्ध्वं प्राणमितिवाक्य इति ॥ अनेन भाष्ये ऊर्ध्वं प्राणमुन्नयतीत्यादितः श्रुत्युदाहरणं पूर्वपक्षे लिङ्गज्ञापनार्थं अन्यथा वामनमासीन-मित्याद्येवोदाहृत्येतेत्युक्तं भवति । लिङ्गत्रयस्यापि वायुपरत्वमुपपादयति ॥ यथेति ॥ यथा सम्राट् राजा अधिकृतान् अधिकारिणः विनियुङ्क्ते आज्ञापयति । कथं त्वमेतानधितिष्ठस्वेति एवमेव एषः प्राणः इतरान् प्राणान्पृथक् स्थाने सन्निधत्ते स्थापयतीत्यर्थः । वृधास इत्यस्यार्थमाह ॥ ज्ञानादिति ॥ कुविदित्यस्य क्वचिदित्युपपदेकथनम् । तद्विषया मकुर्वन्निति तात्पर्यकथनम् । अस्तुवामनश्रुतिस्तथापि ईशानस्य विष्णुत्वं कुत इत्यत आह ॥ तस्याश्चेति ॥ एष उ एव वामनिरेष हि सर्वाणि वामानि नयतीति श्रुत्यन्तरे योगस्योक्तत्वेनोपेन्द्रो वामनः प्रांशुरिति स्मृतेरर्थप्रसिद्धेश्च महायोगरूढिसिद्धत्वामितिभावः । अत्र प्रमितिपदमिति श्रुतेर्निरव-काशत्वेरूपप्राबल्याभावे बहुलिङ्गबाधेन तत्प्रापितार्थविपरीतार्थ प्रापकत्वं नस्यात् ।

अतः श्रुत्यर्थस्य प्रमितत्वोक्त्या श्रुतेर्निरवकाशत्वमेव सूचितमित्यर्थः । श्रुतेर्लिङ्गापेक्षया बलवत्वकथनेनेत्यर्थः । श्रुत्यर्थनिर्णायकश्रुत्यादीनां क्रमेणलक्षणान्याह ॥ नाममात्रेणेत्यादिना ॥ अत्र मात्रपदेन योगो व्यावर्त्यते । तथाच नाममात्रेणेत्यस्य केवलयौगिकपदभिन्नपदेनेत्यर्थः । तेन न योगरूढानां वामनादिशब्दानां श्रुतित्वहानिरिति द्रष्टव्यम् ॥ असाधारणधर्म इति ॥ असाधारणधर्मप्रतिपादकः शब्दः शब्दार्पितः असाधारणधर्मोवेत्यर्थः । नहीहानुमानमात्रं लक्ष्यम् । तस्य वाक्याद्दुर्बलत्वात् किन्तु श्रुतितो दुर्बलं वाक्याच्च प्रबलं वैदिकं लिङ्गमिति भावः ॥ निराकांक्षपदानीति ॥ पर्यवसिताकांक्षापदानीत्यर्थः ॥ एकप्रमेयेति ॥ स्थानेतिव्याप्ति वारणायैकप्रमेयप्रतिपादकेति । वाक्येऽतिव्याप्तिवारणायानेकेति । अनेकाक्षरात्मकपदादावति-व्याप्तिवारणाय वाक्येत्युक्तम् ॥ अनेकप्रमेयेति ॥ प्रकरणेतिव्याप्तिपरिहारार्थमनेकप्रमेय-प्रतिपादकेत्युक्तम् । विरुद्धार्थशास्त्रयोर्मिलितयो नत्वपरिहारार्थमेकार्थत्वात्पर्येत्युक्तमिति ॥ समानोक्तिरिति ॥ निर्णीतस्थल इत्युपस्कर्तव्यम् । तेन विप्रतिपन्नप्रकरणादिगतसमानोक्तेः समाख्यात्वव्यवच्छेदः । सक्षादर्थधीजनकत्वादित्यर्थः ॥ अनुमापकतयेति ॥ व्याप्यार्थप्रतिपाद-नद्वारेत्यर्थः । यथाऽत्रैवयोयं मध्यम इति मध्यमपदस्य मध्यमत्वरुपव्याप्यप्रतिपादनद्वारे-शानशब्दोक्ते वायुत्वनिश्चायकत्वम् ॥ तदानन्तर्यमिति ॥ व्याप्त्यादिपादकद्वारमन्तरेणागमतया विप्रतिपन्नार्थधीजनकत्वादिति । ततो दौर्बल्यमित्यर्थः । यथाऽत्रैव वामनश्रुतितो मध्यमत्वादीलिङ्गानाम् ॥ अनेकार्थकद्वारेति ॥ यथा सर्वाणि हवा इमानि भूतान्याकाशादेव

चक्षुरन्तस्थगतानन्तत्वामृतत्वादेः यथा च विमेकर्णेत्यत्र यं पृथिवी न वेदेत्यादौ च विप्रतिपन्नज्योतिरन्तर्याम्यादिनिष्ठस्योदाहृत वाक्यस्येति ज्ञेयम् ॥ उपक्रमोपसंहारयोरिति ॥ यथावैश्वानर इत्यत्र को न आत्मा किं ब्रह्मेत्युपक्रमस्थब्रह्मादिश्रुतेः यथाच प्रथमे श्रवणादित्यत्र इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीत्युपसंहारस्थाबादिश्रुतेः लिङ्गस्य यथा आत्मा वा इदमेक एवाग्र आसीदित्यत्र य एष तपतीत्याद्युपक्रमवाक्योक्त सूर्यस्थितत्वलिङ्गस्य सर्वत्रप्रसिद्धेत्यत्र सयोतोश्रुत इत्युपसंहारस्थ श्रुतत्वादिलिङ्गस्य वाक्यस्य तु यथान्तर इत्यत्र कं ब्रह्म खं ब्रह्मेत्युपक्रमवाक्यस्य प्राणस्तथेत्यत्र तावा एताः सर्वाऋच इत्यादेरुपसंहारस्ववाक्यस्य अन्यत्रचेदिति विप्रतिपन्नार्थप्रतिपादकवाक्योपक्रमोपसंहारेभ्योऽन्यत्रेत्यर्थः । यथा प्राणस्तथेत्यत्र ब्रह्मेमं पुरुषमित्यादि ब्रह्मश्रुतेः । दहर इत्यत्र य आत्माऽपहतपाप्मेत्यादि लिङ्गस्य अत एव प्राण इत्यत्र श्रीश्चते लक्ष्मीश्चपत्न्यावित्यादि वाक्यस्येति द्रष्टव्यम् ॥ उपक्रमोपसंहारावपीति ॥ उपक्रमोसंहारावपि उपक्रमोपसंहाराभ्यामन्यत्र श्रुतौ श्रुत्यादिनाऽर्थनिश्चये सति तस्मिन्नेवार्थेतात्पर्यज्ञापकावित्यर्थः । यथाऽत्ताचरेत्यत्रात्तुर्ब्रह्मत्वे सर्वात्तृत्वेन विनिर्णीते स एव इत्युपसंहार इति बोद्धव्यम् । अन्यथा तु प्रकरणे यथा द्युभ्वाद्यधिकरणे प्रकरणादीत्यत्र द्वे विद्ये इति परमेश्वरोपक्रमः । अन्यमीशमित्यत्रापि तस्यैव प्रकृतत्वनिश्चायकः । यथा वा आनुमानिकाधिकरणे प्रकरणादित्यत्र तद्विष्णोः परममित्युपसंहारः । अनाद्यनन्तमित्यादे-र्विष्णुप्रकरणतानिश्चायक इति ज्ञेयम् ॥ समख्यापीति ॥ यथा पुरुषविधमित्यत्र शीर्ष्णोरित्यादिपुरुषसूक्तोक्तिसमाना साक्षाद्विप्रतिपन्न वैश्वानरनिष्ठवैश्वानरस्य मूर्धैवेत्याद्युक्तिः ॥ अन्यथाप्रकरणेति ॥ यथा परोदिवापर एना पृथिव्यै तावतीत्यं भृणीसूक्तोक्तिः समाना । अजस्य नाभाविति विप्रतिपन्नाजे साक्षादश्रुता परोदिवापरएना पृथिव्या परोदेवेभिरित्याद्यु-क्तिरिति द्रष्टव्यम् ।

ननु परोवरीयानुद्गीथेत्यादिलिङ्गस्य श्रीश्चते लक्ष्मीश्च पत्न्यावित्यादिवाक्यस्य विप्रति-पन्नार्थव्याप्यप्रतिपादकत्वाविशेषात्कथं लिङ्गवाक्यभाव इत्यत आह ॥ लिङ्गवाक्ययोरिति ॥ अनेकार्थप्रतिपादनमन्तराव्याप्यप्रतिपादकत्वं साक्षात्वं लिङ्गस्य तद्द्वारा विप्रतिपन्नार्थव्याप्य

पदात्मकत्वाविशेषादित्यत आह ॥ लिङ्गवाक्ययोरिति ॥ यत्र वाक्यार्थो तत्रैव लिङ्गस्यसाक्षात्वं व्याप्यरूपः साक्षात्वम् । यत्र तु बाक्यार्थोऽपि न व्याप्यरूपः तदेव वाक्यस्या साक्षात्वमिति बोद्धव्यम् । तदेवोदाहरण मुखेनाह ॥ गोत्रा भिदमिति ॥ यथाऽनयोः लिंगयोः

साक्षादसाक्षत्वेन भेदः एवमेव लिङ्गवाक्ययोः भेदः इत्यर्थः । अत्र लिङ्गवाक्ययोर्भेद लिङ्गे एव द्राष्टान्तिकत्वेन लिङ्गवाक्ये इति भावः । अत एव इत्यादिवदिति वत्करणम् । अनेकपदात्मकस्यापि लिङ्गत्वं सूत्रतद्भाष्यतट्टीकादौ सर्वत्रोक्ततिति भावः ।

ननु भाष्योक्तदिशा प्राणशब्दस्य वाचकत्वेनैवमेव एष प्राण योयं मध्यमप्राण इति प्राणशब्दोपेतवाक्योक्तप्राणे व्यापकत्वमध्यमत्वयोः विष्णावकाशसिद्धावपि वायुशब्दोपेत कुविदंगेति वाक्योक्तरूपोपास्यत्वलिङ्गस्य कथं विष्णाववकाशसिद्धिरित्यत आह वायुत्वमिति ॥ प्राणत्वोक्तेरिति ॥ प्राणत्वपदेन वायुत्वमुपलभ्यते इत्यर्थः ।

**॥ ॐ हृद्यपेक्षयातु मनुष्याधिकारत्वात् ॐ ॥ (१-३-२५)**

अङ्गुष्टमात्र इतीति मात्रपदेनाधिकेराहित्युक्तमुक्तम् । तच्च विष्णौ श्रुत्यादि विरुद्धमिति भावः । पूर्वं मूर्तिविशेषस्य व्यक्तमात्रं मुख्यमित्युक्तम् । इदानीमंगुष्टमात्रत्वोक्तिः औपचारिकीत्यादि कथनवैयर्थ्यादिति । अङ्गुष्टव्यक्तिविरोधेनिर्धारणंविना यत्किञ्चदंगुष्टमात्रत्वेनोपासायाः असंभवात् कथं व्यर्थमिति अर्थः ॥ असंभवादिति ॥ पिपीलिकाहृदयस्ये अङ्गुष्टमात्र सामान्यस्यभावादित्यर्थः ।

प्रतिपादकत्वं वाक्यस्यासाक्षात्वमिति बोद्धव्यम् । तथाच लक्षणवाक्ये व्याप्यार्पकपदं लिङ्गं तदर्थकानि निराकांक्षपदानि । वाक्यमिति विवक्षितमिति भावः । तदेवोदाहरणमुखेन दर्शयति ॥ गोत्रभिदमिति । वत्करणस्य तद्यथेत्यादिवदुदाहरणार्थत्वमिति भावः । यद्वा लिङ्गं द्विविधम् । एकपदात्मकमनेकपदात्मकं चेति । नन्वेकपदात्मकस्य लिङ्गस्य वाक्यस्य कथं भेदः । द्वयोरप्यनेक पदात्मकत्वविशेषादित्यत आह ॥ लिङ्गवाक्ययोरिति ॥

पूर्वं सौत्रस्तुशब्द एवकारार्थो व्याख्यात इदानीमंगुष्ठभावेऽपीति भाष्यानुसारादपिशब्दार्थतया व्याचष्टे ॥ तुशब्दोऽपिशब्दार्थ इति ॥ अनेन तुशब्दस्य तथापीत्यर्थकस्य तु मनुष्याधिकारत्वादित्युत्तरवाक्ये शेषत्वमपीत्युक्तं भवति । अत्राद्येस्वपक्षसाधकोक्तिः । द्वितीये बाधकोद्धार इति सूत्रक्रमः ॥

**८. देवताधिकरणम् । ॐ तदुपर्यपि बादरायणः संभवात् ॐ । (१-३-२६)**

ननु अध्यायपदासंगतत्वान्नेदमधिकरणमारब्धव्यमित्यत आह ॥ प्रासङ्गिकत्वादिति ॥ मुखतो व्युत्पाद्येऽधिकारे न साक्षादध्यायसङ्गतिर्गवेषणीयेत्यर्थः । प्रासंगिकसङ्गतेस्तत्रापि सत्वात्फलिते

देवोपास्यत्वलिङ्गसमन्वये साक्षात्सङ्गतेरपि सत्वाच्च मनुष्याधिकारत्वादित्यनेन देवाद्यधिकारादेः स्मारितत्वात्प्रसंगिकत्वमिति भावः ।

ननु स्मृतस्योपेक्षानर्हत्वं प्रसङ्गसङ्गतिः । तथा च कथमस्योपाक्षानर्हत्वमित्यतस्त-द्दर्शनपरत्वेन मनुष्याणामेवेति भाष्यं व्याचष्टे ॥ श्रुत्यादिसङ्गतिमिति । यद्यप्यसार्वत्रकीत्यादौ देवानामपरोक्षज्ञानाधिकारसदसद्भावचिन्तावदियमपि चिंता तत्रैव कर्तव्या । तथापि पूर्वाधिकरणस्थमनुष्यपदस्य विशिष्टबुध्यादिहीनतिर्यगाद्येव व्यावृत्यं नतु देवादीत्यनेनरुपेणेयं चिन्ता न तृतीये संगता किन्तु अत्रैव यथाभोक्त्रापत्तेरिति मुक्तेशयोभेदसमर्थनं फलविचाररूपेण चतुर्थे सङ्गतमपि युक्तिविरोधपरिहारेण द्वितीये सङ्गतं तथेति भावः । उपासत इत्यत्रादिशब्देन तं भूतिरिति देवा उपासांचक्रिरे इत्यादिग्रहणम् । मनुष्याणामेवेत्युक्तिरिति पूर्वाधिकरणे सूत्रभाष्ययोर्मनुष्याधिकारत्वादित्यत्र बुध्याविवेकेन मनुष्याणामेवाधिकारित्वादित्यभिप्रेतम् । अन्यथा तथापि नांगुष्ठमात्रत्वं विष्णोरिति शङ्कापरिहारत्वं न स्यादिति भावः । ननु प्रयोजनान्तरसद्भावादर्थिता स्यादत आह ॥ नहीति ॥ कर्माधिविरोधापातादिति ॥ देवानां मुक्त्याद्यङ्गीकारे पूर्वमुत्तरत्रच देवानामभावे न तदुद्धेशेन द्रव्यत्यागात्मककर्मणो वैय्यर्थ्याख्यविरोधः स्यादित्यर्थः । न तदुपास्यत्वं विष्णोः संभवतीति । तथाच पूर्वाधिकरणे पूर्वपक्षप्रापकलिङ्गस्य विष्णववकाशोक्तिर्नस्यादिति भावः ॥ संदेहबीजं विघटयन्निति ॥ तिर्यगाद्यपेक्षयेत्यादि भाष्येण मनुष्याणामेवेत्यन्ययोगव्यवच्छेदपरैवकार व्यावर्त्य विवेककथनेन सावधारणोक्तेर्देवानामधिकाराभावरूपकोट्युपस्थापकत्वाभावोक्तेरिति भावः । तिर्यगाद्यपेक्षयेति भाष्यार्थस्य सूत्रे कंठतोऽनुक्तेराह ॥ मनुष्यपदमिति ॥ विद्यादिभिरिति देवादिपदस्य सादित्वाभ्युपगमेऽर्थात्सांतत्वस्याप्यंगीकृतत्वादिति भावः । नन्वत्र बादरायणपदप्रयोगः किमर्थ इत्यत आह ॥ विप्रतिपत्तीति ॥ मध्वादिष्वितिवक्ष्यमाणजैमिन्यादिना विप्रतिपत्तिसूचनायेत्यर्थः । विशिष्टबुध्यादिराहित्यरूपोपाधिग्रस्तत्वान्नानुमानं युक्तमित्याह ॥ नतिर्यगादीनामिति ॥ यत्राधिकाराभावस्तत्र विशिष्टबुध्यादीति ।

ननु शूद्रादावधिकाराभावरूपसाध्यसत्वेऽपि विशिष्टबुध्यादिरूपोपाधेरभावेन व्यभिचा-रान्नोपाधिः संभवतीत्यत आह ॥ अनेनेति ॥ निषेधाभावकथनेनेत्यर्थः । तथाच शूद्रादावधि-काराभावरूपसाध्यस्य सत्वेऽपि निषेधराहित्यरूपविशेषणाभावप्रयुक्त विशिष्टाभावरूपोपाधेरपि निषेधविषये शूद्रादौ सत्वेन नव्यभिचार इत्यर्थः । तथाच देवाः वेदविद्याधिकारिणः

निषेधराहित्येसति विशिष्टबुध्यादिमत्वात् । योग्यत्रैवर्णिकवदित्यनुमानमुक्तं भवति ।। वेदाधि-कारितयेति शेष इति ।। एवमुक्तो भ्रातृभिस्तु जरितारिर्विभावसुम् । तुष्टाव प्राञ्जलिर्भूत्वा यत्तत् श्रुणु नराधिपेत्यादि भारतवचनैर्जरिसारिसृकूस्तंबमित्रद्रोणाख्यानां चतुर्णां पक्षिणामयमग्ने जरितेत्याग्नेयसूक्तेनाग्निस्तावकत्वेन तन्मन्त्रद्रष्टृत्वस्य प्रसिद्धत्वादिति भावः ।

ननु भवदुक्तक्तानुमाने मनुष्यत्वमुपाधिः साध्यव्यापकत्वसाधना- व्यापकत्वयोः सत्वादित्यत आह ।। अनेनैवेति ।। अमनुष्याणां जरितर्यादीनां वेदविद्याधिकारप्रदर्शनेनैवत्यर्थः ।

उपाधेः साध्याव्यापकत्वादिति भावः ।

**।। ॐ विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् ॐ ।।** (१-३-२७)

यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्नित्यस्यार्थमाह ।। देवा इति । देवतापदस्य सादित्वप्रतिपादकतया भाष्योदाहृत श्रुतिं व्याचष्टे ।। देवत्वयोग्यामनुष्या इति ।। अन्यथा आसन्निति यज्ञानन्तरं देवतापदप्राप्त्यु किर्नस्यादिति भावः ।। तानीत्यस्य व्यत्ययेन तेनेत्यर्थः । धर्माणीत्यस्यार्थो लोकधारका इति ।। महिमान इत्यस्यार्थो महात्मान इति । ह इत्यस्य पुनरित्यर्थः । नाकमित्यस्यार्थः पूर्णसुखात्मकमोक्षमिति ।।

**।। ॐ शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्यां ॐ ।।** (१-३-२८)

देवानामाद्यन्तवत्वेऽपि वेदप्रामाण्यं कुत इत्यतस्तेषामनित्यत्वेवेदाप्रामाण्यमुपपादयति । वेदस्येति ।। वाच्यहीनत्वेऽपि वाचोऽप्रामाण्यं कुत इत्यत आह ।। यावतेति ।। तदेवेति ।। वाच्यहीनत्वमेवेत्यर्थः । कर्तृसार्वज्ञ इति विवक्षिततत्वज्ञानं करणपाटवमविप्रलिप्सा प्रमादा-भावश्चेति चतुष्टयस्याप्तिशब्दार्थत्वेन तदन्तर्गतसार्वज्ञ्येन प्रामाण्यमित्यर्थः ।। विवादपदमिति ।। धर्मादिकमित्यर्थः । धर्मान्तरसाधनपातादिति ।। प्रमेयत्वेन प्रति पन्नास्मादादिप्रत्यक्षत्वस्य साधनापातादित्यर्थः । नतावत्सामान्यमिति ।। न जातिरित्यर्थः उपाधित्वेऽपीति ।

अत्रकश्चित् सामान्यं द्विविधं जातिरूपमुपाधिश्च । तत्र प्रमेयत्वस्य केवलान्वयित्वेन जातित्वेऽप्युपाधित्वं भविष्यति । न च तथात्वेऽपि क्वचिदन्तर्भावोवाच्यः । सामान्य एवान्तर्भा-वेनान्यत्रान्तर्भावाभावात् । नचैवं प्रमेयत्वे नित्यानेकसमवेतत्वाभावेन सामान्यलक्षणासंगृहीतस्य कथं तत्रान्तर्भाव इति वाच्यम् । परंपरासंबध्धा या जातिरेवोपाधित्वात् । तर्हि जात्युपाधिभेदः

किं निमित्त इति चेत् । साक्षात् संबन्धेन जातित्वस्य परंपरासंबन्धेनोपाधित्वस्य च संभवादिति । तन्न एवंहि परंपरया जनके व्याप्तिज्ञानादौ जनकत्वव्यवहारवत् परंपरासंबन्धेन प्रमेयमिति बुद्धिविषये प्रमेये प्रमेतिबुद्धिः स्यात् । प्रमेयत्वस्य प्रमासंबन्धरूपत्वेन संबन्धप्रकारिकाया बुद्धेरदृश्यत्वात् । न च तादृशी बुद्धिः क्वचिद्दृष्टा । तथा चोपाधिः सामान्यानन्तर्गत एव पृथक्वक्तव्यः । तथाच क्वचिदन्तर्भावानुक्तौ सप्तपदार्था इति नियमभंगः स्यात् । तस्मात् क्वचिदन्तर्भावोवक्तव्य इति साधूक्तमुपाधित्वेऽपि क्वचिदन्तर्भावस्यापेक्षितत्वादिति । तत्र न तावद्द्रव्येऽन्तर्भाव इत्याह न तावदिति । निर्गुणत्वादिति ॥ गुणवत एव द्रव्यत्वादिति भावः । अस्वतन्त्रादिति ॥ आश्रयाविषयकप्रतीत्यविषयत्वादित्यर्थः । गुणादावपीति ॥ गुणादौ गुणादेरनंगीकारादिति तत्सिद्धान्तादितिभावः । अनित्येऽपीति । विशेषस्यतेननित्यमात्र-वृत्तित्वाङ्गीकारादितिभावः ।

भावभवित्रोरिति । प्रमेयप्रमेयत्वयोरित्यर्थः । उक्तानतिवृत्तेरिति । पूर्वोक्तदूषणानुवृत्तिः स्यादित्यर्थः । पर्यायतापातादिति । तथाच प्रमेये प्रमेयत्वमिति सहप्रयोगो न स्यादिति भावः । एवंपरत्वादीति । परस्य भावः परत्वमित्यपि वक्तुं शक्यत्वेन गुणादिविलोपः स्यादिति भावः । ननु प्रमाप्रमाविषयतत्संबन्धेषु मिलितेष्वन्तर्भावोऽस्त्विति शङ्कते ॥ प्रमेति ॥ संयोगसमवायौ स्यातामित्यत आह ॥ नहीति ॥ स्वगुणस्यैव गुणिना समवायः द्रव्ययोरेर्वसंयोग इति तद्राद्धान्तादितिभावः । उक्तदोषेति । उक्तदोषलंघने असमर्थत्वादित्यर्थः । मास्तु सर्वज्ञत्वे प्रमेयत्वं हेतुः ज्ञेयत्वादिकमेवभविष्यतीत्यत आह ॥ एषैवदिगिति । अन्यस्मिन् कालेज्ञेयत्वादि-धर्मान्तरविषयेऽप्ययमेव दूषणप्रकार इत्यर्थः । तथाच तस्यापि नोक्तसाध्ये हेतुत्वं संभवतीति भावः । पर्वतेतरत्वादीनामपि व्याप्तिरस्तिनवा आद्यं निरस्यति ॥ पर्वतेतरत्वादीनामिति । तथा च व्याप्तिसत्वे अस्तु तस्यापि उपाधित्वमिति भावः । द्वितीयं निराह ॥ अनुमानेति ॥ पूर्वानुमाने उपजीव्यानुकूलतर्केण बाधात् पर्वतेतरत्वोपाधेः साध्यव्याप्त्यभावे उपाधेः स्वयमेव दुष्टत्वादित्यर्थः । ननु हेतावसिद्धिवारकं विशेषणं व्यर्थमित्यत आह ॥ न चेति ॥ व्यभिचारवा-रकविशेषणादानेऽनुमानस्य व्याप्तिवैधुर्येणाभासत्वं स्यादत आह ॥ व्याप्तिवदिति ॥

ननु सकर्तृकत्वे कार्यत्वमेव प्रयोजकं न तु शरीरत्वम् । तथाचोपाधिः साध्ये प्रयोजक इत्यत आह ॥ सकर्तृकत्व इति ॥ लोकानुकूल्येनेति ॥ लोके विचित्रप्रासादादिनिर्माणे बहुकर्तृकस्यैव दृष्टत्वादिति भावः ॥ अस्तुवेदानीं सर्वज्ञत्वनिश्चयः अविप्रलंभकत्वनिश्चयस्तु सर्वथा न

संभवतीत्याह ॥ अविप्रलंभादीति ॥ आप्त्यनिश्चयादिति भाष्यं आप्तमूलकत्वानिश्चयादित्यपि व्याचष्टे ॥ अस्तुवेति ॥ वेदत्वस्येति ॥ यथा वेदत्वेन हेतुना सर्वज्ञप्रणीतत्वं साध्यते तथा वेदत्वेनैव वेदस्य पामरप्रणीतत्वमपि साधयितुं शक्यमित्याभास समानयोगक्षेमं तदीयानुमानमित्यर्थः ।

ननु पामरप्रणीतकालिदासादिवाक्यरूपात् पक्षात् व्यावृत्तत्वेन असाधारण्यमिति चेत् तर्हि सर्वज्ञप्रणीतभारतादिरूपसपक्षाद्व्यावृत्तत्वेन त्वत्पक्षेऽप्यसाधारण्यमित्याह ॥ असाधारण्यस्येति ॥ उक्तदोषादिति ॥ प्रमाण्याभावरूपोक्तदोषादित्यर्थः । चक्रकापातादिति । ईश्वरस्य सर्वज्ञत्वे तस्मात् सर्वज्ञादित्यादिना वेदस्य सर्वज्ञप्रणीतत्वसिद्धिः । तत्सिद्धौ च वेदस्य प्रामाण्यसिद्धिः । तत्सिद्धौ वेदेन सार्वज्ञ्यसिद्धिरिति चक्रकापातादित्यर्थः । अदृष्टादाविति ॥ प्रत्यक्षस्य धर्मादिगोचरत्वाभावेन तस्य मूलप्रमाणत्वं न संभवतीति भावः । अदृष्ट संभावनेऽपीति ॥ देवदत्तशरीरादिकं देवदत्तगुणजन्यं कार्यत्वे सति देवदत्तस्य भोगहेतुत्वात् देवदत्तप्रयत्नजन्यवस्तुवत् इत्यनुमानेन अदृष्टस्य सामान्यतः सिद्धावपीत्यर्थः । देवदत्ताशरीरत्वं अत्राप्युरस्तीति कथंथिदित्युक्तम् । विशेषसिद्धिमेवाह ॥ नहीति ॥ श्रुतिसिद्धमिति ॥ वाचाविरूपनित्ययेत्यादि सिद्धमित्यर्थः । आप्तोक्तत्वाभावादिति ॥ ज्ञानगत याथार्थ्यस्यगुणजन्यत्वात् वेदे च आप्तोक्तत्वगुणाभावात् यथार्थज्ञानकरणत्वरूपप्रामाण्याभाव इति भावः । भवेदेतद्यदि ज्ञानगतयाथार्थ्यस्य गुणजन्यत्वं स्यात् तदेवतु नास्ति अतो नित्यत्वेऽपि वेदस्य आप्तोक्तत्वगुणाभावेऽपि न प्रामाण्यसिद्धिरित्याशयेन परिहरति ॥ मैवमिति ॥ प्रामाण्यस्य स्वतस्त्वं साधयितुं प्रामाण्यं निर्वक्ति ॥ प्रामाण्यं नामेति ॥ प्रामाण्यस्य स्वतस्त्वेऽनुमानमाह ॥ याथार्थ्यमिति ॥ सिद्धसाधनतावारणाय अतिरिक्तकारणपदम् । हेतावप्रमाण्ये व्यभिचारवारणाय सत्यन्तम् । घटादौ व्यभिचारवारणाय विशेष्यम् । दोषाभाव इति ॥ अयथार्थत्वे दोषान्वयव्यतिरेकयोः सत्वेन दोषाभावेऽयथार्थमेव न सिद्ध्यति । तथा च बाध इति भावः ॥

प्रमाज्ञानसामग्रीव्यतिरिक्तकारणजन्येत्यत्र प्रमात्वविशिष्टं वा पक्षः तदुपलक्षितं वा । तत्राद्यं विकल्प्यदूषयति ॥ प्रमाया इत्यादिना ॥ अजन्यत्वादिति ॥ तस्य जातित्वेन नित्यत्वादिति भावः । द्वितीयमाशङ्कते ॥ प्रमात्वयुक्तज्ञानस्येति ॥ अत्रापिकिं ज्ञानकारणातिरिक्तमात्रजन्यत्वं साध्यं किं वा ज्ञानत्वप्रयोजककारणजन्यत्वे सति अतिरिक्त जन्यत्वम् । आद्ये प्रमात्वयुक्तज्ञानस्यापि ज्ञानत्वाद्व्याघात इत्याह तादृशज्ञानस्यापीति ॥ द्वितीयं शङ्कते । ज्ञानकारणेति ॥ ज्ञाने व्यभिचारापरिहारादिति ॥

ननु ज्ञानं द्विविधं प्रमाऽप्रमाच । तत्राप्रमारूपज्ञानस्य दृष्टान्तत्वेन प्रमारूपज्ञानस्य पक्षीकृतत्वेनेतोऽतिरिक्त ज्ञानस्यैवाभावात् कुत्र व्यभिचार इति चेत् । न प्रमारूपज्ञानविशेषे ज्ञानसामान्यसामग्र्यतिरिक्तजन्यत्वं साधयता सामान्यविशेषसामग्र्योर्भेदोवाच्यः । तथाच सामान्यविशेषकार्ययोरपि भेदोवाच्यः कार्यभेदं विनासामग्री भेदासिद्धेः । तथा च ज्ञानसामान्ये व्यभिचारापरिहारादित्यर्थः । यद्वा अस्ति ज्ञाने ज्ञानत्वं प्रमात्वं च । तत्र प्रमात्वावच्छिन्नज्ञानस्य पक्षत्वं प्रमात्वावच्छेदेन साध्यसन्देहात् ।

ज्ञानत्वावच्छिन्नस्यतुविपक्षत्वम् । तदवच्छेदेन साध्याभावस्य निर्णीतत्वात् । तथाच ज्ञान सामान्ये व्यभिचारापरिहारादित्यर्थः । यद्वा अस्ति ज्ञाने ज्ञानत्वं प्रमात्वं च । तत्र प्रमात्वावच्छिन्नज्ञानत्वावच्छिन्नस्यतु विपक्षत्वम् । तदवच्छेदेन साध्याभावस्य निर्णीतत्वात् । तथाच ज्ञानत्वरूपसामान्यधर्मावच्छिन्ने ज्ञाने व्यभिचारापरिहारादित्यर्थः ।

नन्वत्र ज्ञानसामान्यकारणमात्रजन्यत्वाभावो वा ज्ञानसामान्यकारणातिरिक्त ज्ञानेऽपीति । ज्ञानं ज्ञानकरणमात्रजन्यं न कार्यत्वादित्यपि साधयितुं शक्यत्वादित्यर्थः । नन्वेवं व्याधात इत्यत आह ॥ विशिष्टाभावविकल्पेनेति ॥ यथा प्रमायां ज्ञानकारणातिरिक्तकारणमात्रजन्यत्वस्य व्याहतत्वेऽपि ज्ञानकारणमात्र जन्यत्वरूपविशिष्टाभावो न व्याहतः तस्य जन्यत्वाभावेन वा जन्यत्वेऽपि ज्ञानकारणदतिरिक्तजन्यत्वेन वोपपत्तेः । तथा ज्ञानेऽपि यादृच्छिकसंवादिस्थले अतिरिक्तकारणं विनाऽपि दृष्टायाः भ्रमस्याप्यधिष्ठानांशे प्रमात्वेन प्रमात्वरहितज्ञानव्यक्तेरभावेन ज्ञानवदनुवृत्तत्वेन दृष्टायाश्च अतिरिक्तजन्यत्वे ज्ञानस्यापि तज्जन्यत्वप्रसङ्गादित्यर्थः । व्याघात इत्युपलक्षणम् । ईशज्ञानस्य पक्षत्वेऽपि तत्र जन्यत्वाभावेन साध्यसंभवादंशे बाधोऽपि नेत्यर्थः । एवं चास्मिन् पक्षे समीकरणादिति पाठोऽभिप्रेतः । यद्वा ननु ज्ञानसामान्ये ज्ञानसामग्री-मात्रजन्यत्वाभावः सिध्यति जन्यत्वेन वाऽतिरिक्तजन्यत्वेन वासिध्यति । आद्येकार्यत्वादिति हेतुवाक्येन व्याघातः । द्वितीये प्रतिज्ञापदयोरेव व्याघातः । ज्ञानसामान्यहेतौ तदतिरिक्तत्वा-भावादित्यत आह ॥ विशिष्टाभावकल्पनेति ॥ प्रमायामपि नाजन्यत्वेन विशिष्टाभावपर्यवसानं पूर्ववद्धेतुपदव्याघातादेव नाप्यतिरिक्त जन्यत्वेन प्रमाया अपि ज्ञानत्वेन तत्कारणस्य ज्ञानसामग्र्यातिरिक्तत्वासंभवेन प्रतिज्ञापदयोर्व्याधातादित्यन्यत्रापि व्याघातस्य तुल्यत्वादित्यर्थः । अथवा ननु ज्ञानं ज्ञानकारणमात्रजन्यं न कार्यत्वादित्युक्तम् । अत्र विशिष्टाभावः साध्यः । तथाच ज्ञानकारणातिरिक्ताजन्यत्वेसति ज्ञानकारणजन्यत्वविशिष्टं तदभाव इत्यर्थः । अयं च

विशिष्टाभावः ज्ञानकारणजन्यत्वरूपविशेष्याभावाद्वा ज्ञानकारणातिरिक्ताजन्यत्वरूपविशेषणाभावाद्वा नाद्यः । एवं हि ज्ञानं ज्ञानकारणादन्यं नेति वक्तव्यम् । एवं च ज्ञानं पुनर्ज्ञानकारणजन्यं नेत्युक्ते व्याघातात् । नद्वितीयः । ज्ञानं ज्ञानकारणातिरिक्ताजन्यं नेत्युक्ते ज्ञानकारणातिरिक्तजन्यमिति च वक्तव्यम् । ज्ञानकारणातिरिक्तं च ज्ञानकारणमेव । तथा च ज्ञानकारणेन ज्ञानं जन्यत इति स्फुटो व्याधातः । तथा च नैवं साधनं युक्तमित्यत आह ॥ विशिष्टाभावविकल्पेन व्याघातस्य समीकरणादिति ॥ विशिष्टाभावस्य विशेष्याभावाद्विशिष्टाभावः विशेषणाभावाद्वेति योविकल्पस्तेन व्याघातस्य प्रमायामपि तुल्यत्वादित्यर्थः । प्रमायामपि ज्ञानकारणातिरिक्तजन्यत्वे सति ज्ञानकारणाजन्यत्वरूपविशिष्टाभावो विशेष्याभावाद्वाविशेषणाभावाद्वा नाद्यः । प्रमाज्ञानकारणातिरिक्तजन्यानेत्युक्ते प्रमायाः ज्ञानत्वेन ज्ञानकारणजन्यत्वाभावे व्याघातः स्यात् । न द्वितीयः प्रमाज्ञानकारणातिरिक्त जन्येत्युक्ते ज्ञानकारणातिरिक्तं ज्ञानकारणमेवायास्यति । तथा च प्रमाया अपि ज्ञानत्वेन ज्ञानकारणजन्यत्वे स्फुटो व्याघातः स्यात् । न चाजन्यत्वेनोपपत्तिः । कार्यत्वादिति हेतुवाक्येन व्याघातादिति भावः । प्रतिज्ञानिरासेनैव निरस्तमिति प्रमा ज्ञानसामग्री व्यतिरिक्तकारणजन्येति प्रतिज्ञानिरासेनैवेत्यर्थः । परतस्त्ववादिनाऽपि गुणत्व जातेरनङ्गीकारेण गुणशब्देन ज्ञानकारणातिरिक्तकारणस्यैव विवक्षणीयत्वेन पूर्वोक्तव्याघातापत्तेरित्यर्थः । कार्यत्वरूपहेतुदोषस्य घटज्ञानयोर्व्यभिचारस्यात्र हेतावसंभवात् प्रतिज्ञानिरासेनेत्युक्तम् । अंन्यत्रानुपक्षीणामिति । नान्यथासिद्धमित्यर्थः । सामान्यं चेति अन्यथासिद्धमित्यर्थः । व्यभिचारादिति । अन्यथासिद्धन्वयव्यतिरेकयोर्दंडत्वादौ सत्वेऽपि कारणत्वाभावेन व्यभिचारान्नान्यथासिद्धान्वयव्यतिरिक्तमात्रेण कारणत्वसाधनं युक्तमित्यर्थः । ननु गुणस्य दोषनिरासे प्रमायां च कारणत्वमस्त्वित्यत आह ॥ न चोभयेति ॥ तथाचान्वयव्यतिरेकरूपकल्पकाभावान्नोभयकारणत्वं तस्येत्यर्थः ।

नन्वेवम् अप्रमाया अपि स्वतस्त्वं स्यात् । तत्रेपि दोषस्य गुणनिरासोपक्षीणत्वादिति वक्तुं शक्यत्वादित्याशंक्यनिषेधति ॥ न चैवमिति ॥ नन्वेवं गुणस्याप्यन्वयवतिरेकबलादुभयत्रं कारणत्वं कल्प्यत इत्यत आह ॥ नचैतदिति ॥ अभ्युच्चयवादेनाह ॥ दोषाभावस्येति ॥ गुणजन्यत्वे आप्तोक्तत्वप्राप्त्या अपौरुषेयत्वहानिः । दोषाभावस्य कारणत्वे तन्नास्तीत्यर्थः । प्रमात्वादिति ॥ तथाच तदन्वयवतिरेकित्वादित्यत्रोक्तदोषाप्राप्तिरिति भावः । तत्रैवेति ॥ ईशप्रमायामित्यर्थः । घटादाविति ॥ गुणजन्यत्वाभावरूपसाध्यसत्वेऽपि जन्यत्वरूपोपाधेर-

भाव्यभिचार इत्यर्थः । अजन्यप्रमात्वमिति । जन्यप्रमात्वाभाव इत्यर्थः । तेन घटादौ साध्याव्यापकत्वमिति भावः । व्याप्त्यभावादिति ॥ यादृच्छिकसंवादिदुष्टवाक्यजन्यप्रमायां गुणजन्यत्वाभावरूपसाध्यस्य सत्वेऽपि जन्यप्रमात्वाभावरूपोपाध्यभावादित्यर्थः । कर्तृगुण-निरपेक्षस्यापीति । ज्ञानगतयाथार्थ्यप्रयोजकत्वेनाभिमत कर्तृगुणाप्तत्वनिरपेक्षस्यापि वेदस्य यथार्थ ज्ञानकारणत्वरूपप्रामाण्य- सिद्धिरित्यर्थः ॥ देवताह्वानादिरूपस्येति ॥ एह्यग्र इत्यादिमन्त्राणां देवताह्वानाद्यर्थत्वात्तदा देवताभावे तदाऽऽह्वानाद्ययोगादिति भावः । स्वरूपनित्यत्वाभावेऽपीति ॥ न च जीवस्वरूपस्य नित्यत्वात् कथमेतदिति वाच्यम् । जीवस्वरूपस्य देवत्वपदस्या-नित्यत्वादितिभावः ।

अतीतविषयैवेति ॥ अन्यथाऽकल्पयदिति लङ्नस्यादिति भावः । ननु प्रलयकालीनत्वं हेतूक्रियते इत्यत आह ॥ अप्रलयेति ॥ तन्मते प्रलयाभावेन तद्व्यावर्तकं विशेषणं व्यर्थमितिभावः । प्रलयकालत्वमेवहेतुः । न च व्यर्थविशेषणत्वम् । प्रलयप्रमाण सिद्धत्वादिपरिहरति ॥ प्रलयस्येति ॥

**॥ ॐ अत एव च नित्यत्वं ॐ ॥ (१-३-२९)**

तदभावादेवेति ॥ प्रामाण्यस्य साधितत्वेनाप्रामाण्यस्याभावेनेत्यर्थः । अनुपपत्तेरिति ॥ वेदस्याह्वानादिरूपत्वेनावर्त्तमानविषयत्वान्नातीत- विषयत्वमित्यनुपपत्तेरुक्तत्वादित्यर्थः । ननु देवादीनां सादित्वे अयं देवः अयं ब्राह्मणः इति जातिसंकेतेनोपपद्यते इति शङ्कते ॥ जातीति ॥ तर्हि ब्राह्मणादुत्पन्नस्यैव ब्राह्मणत्वादिजातिरिति नियमः कथमुपपद्यते इत्यत आह ॥ ब्राह्मणादेवेति ॥ तत्र दृष्टान्तमाह ॥ वृश्चिकताण्डुलीयकादिवदिति ॥ यथा गोमयं तण्डुलकारणादिविजातीयजन्यानामपि वृश्चिकत्वताण्डुलीयकत्वादिजातिः तथैव ब्राह्मणा-ज्जातस्यापि सर्गादिकालीनस्यापि ब्राह्मणत्वजातिरित्यर्थः ॥

**॥ ॐ समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात्स्मृतेश्च ॐ ॥ (१-३-३०)**

ननु तस्य प्रतिकल्पं पाठभेदः कल्प्यत इत्यत आह ॥ तस्येति ॥ न च स्मृतावनादि-निधनेत्यनेनोत्पत्तिनाशराहित्यस्योक्तत्वान्नित्येति किमर्थमिति न च वाच्यम् । प्रकृत्यादि-पदवत्स्वतोऽप्युत्पत्ति विनाशराहित्य प्रतिपादकत्वादितिभावः । अनादिनिधनेतिस्मृतेर्देवानां समाननामरूपत्व प्रतिपादकत्वसिध्यर्थं ऋषीणामित्येतद्योगवृत्तिमाश्रित्य ब्रह्मादिदेवतापरत्वेन

व्याचष्टे ।। ब्रह्मादिविबुधानामिति ।। ऋषज्ञान इति प्रसिद्धमितिभावः । नामधेयानां वेदशब्दान-तिरिक्तत्वान्नित्यत्वाच्च न तत्कारणमित्यतो व्याचष्टे ।। तान् शब्दानिति संयोजितवानिति ।। अयं शब्दोऽत्र शक्त इति ज्ञापितवानित्यर्थः । शब्दार्थसंबन्धस्यौत्पत्तिकत्वाद्देवताह्वानादि प्रतिपादकवेदस्याती विषयत्वानुपपत्तेराह ।। भगवन्मात्रविषयत्वस्यचेति ।।

**।। ॐ मध्वादिष्वसंभवादनधिकारं जैमिनिः ॐ ।।** (१-३-३१)

वसूनामेवैकोभूत्वेत्यादिनेति भाष्यगतादिशब्देन रुद्रादिपदफलक द्वितीयमधुविद्यादि-ब्रह्मविद्याः वस्वादिपदफलककर्मविद्याश्चोपात्ता इति ज्ञातव्यम् । मुक्तिफलकासुवामुक्तीतर-फलकासु ब्रह्मविद्यासु वा देवानामधिकार इतिवक्तुं विद्याभेदमाह ।। वेदविद्या इति ।। न च द्वितीयामृतविद्यादिष्विति तद्यत्प्रथमममृतं तद्वसव उपजीवन्तीत्युक्त प्रथमामृतविद्याया वसुत्व-फलकत्वेन तत्र वसूनामनधिकारेऽपि अथयद्वितीयममृतं तद्रुद्रा उपजीवन्ति इत्यादि-नोक्तद्वितीयाद्यमृतविद्यासु रुद्रत्वादेः फलत्वेन तत्राधिकारोऽस्त्विति च न वाच्यमित्यर्थः । प्रकाशवानस्मिन्लोके भवतीत्यादीनामिति ।। प्रकाशवानस्मिन्लोके भवति प्रकाशवतो हि लोकान् जयतीत्यादिनोक्तानामेषवैसोम्य चतुष्कपालः पादोब्रह्मणः प्रकाशवान्नामेत्यादि विद्याफलानां अस्मिन् लोके प्रकाशवत्वादीनां मधुविद्याफलभूत वसुत्वादावन्तर्भाव इत्यर्थः ।

न ह वा एवं विदिति ।। न हवा एवं विदीत्यादिनोक्तेषु सर्वभोक्तृत्वादिरूपेषु तेह बाणा अहं श्रेयसिव्यूदिरे इत्यादिना प्राणविद्याफलेषु रुद्रादेरेव योग्यत्वादित्यर्थः । अनेन प्राचीनपक्षे दोषान्तरं चोक्तं भवतीति ।। न केवलं मुक्तीतरफलकासु कर्मब्रह्मविद्यासु नाधिकार इति य आद्यपक्षे पूर्वोक्तो वस्वादीनां मधुविद्यादिफले वसुत्वादावधिकाराभावदोषः किन्तु विद्यासाध्ये वसुत्वादिसाधने ज्ञाने अर्थित्वाभावादेव वस्वादीनां सिद्धज्ञानत्वादित्यर्थः । बादरायणस्त्विति यथाश्रुते तुशब्दप्रयोजनाभावादिति भावः । अत्राद्ये देवानामधिकारं विज्ञाय तत्र संभवादित्यनेनाधिकारसंभवरूपहेतोस्तत्साधकत्वविशिष्टबुध्यादिमत्वहेतोश्चोक्तिः । द्वितीये देवतापदस्य सादित्वे प्राप्तकर्मविरोधपरिहारः । तृतीये देवताप्रवाहस्यानादिनित्यत्वमङ्गीकृत्य शब्दाप्रामाण्यरूपविरोधपरिहारः । चतुर्थे देवताप्रवाहानादिनित्यत्ववेदनित्यत्वरूपयुक्तिः । पञ्चमे देवानां समाननामरूपत्वकथनेन वेदाप्रामाण्यपरिहारः । षष्ठेमोक्षेतरफलकब्रह्माकर्मविद्यास्वधि-काराक्षेपः । सप्तमे मोक्षफलकास्वप्यधिकाराक्षेपः । अष्टमे अप्राप्तज्ञानं मोक्षविशेषसत्वेन तदर्थितया सर्वविद्यास्वप्यधिकारोक्त्या सूत्रद्वयोक्ताक्षेपद्वयपरिहार इति सूत्रक्रमः ।।

## ९. अपशूद्राधिकरणम् । ॐ शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि ॐ । (१-३-३४)

वेदोक्तेति ॥ शूद्राणामपि तत्रोक्तब्रह्मविद्यायामधिकाराद्वेदोक्तेत्युक्तम् । अत्र पूर्वाधिकरण-सिद्धान्तरीत्यापूर्वपक्षोत्थानादनन्तरसंगतिः । न चोक्तविरोधाभावादसङ्गतिरिति शूद्राणां वेदविद्याधिकारेऽपि श्रुत्यादिविरोधेऽपि मनुष्याधिकारत्वादित्यनेनोक्तमनुष्याधिकारे श्रुत्यादि-विरोधोनास्ति त्रिवर्णमुख्यानां वेदविद्याधिकारस्य श्रुतत्वात् । तथा च यत्र श्रुत्यादिविरोधः शूद्राणां वेदविद्याधिकारे न स पूर्वाधिकरण उक्तः । यस्तूक्तोमनुष्याणामधिकारो नात्र श्रुत्यादिविरोध इति न पूर्वाधिकरणेनास्य संगतिरिति न वाच्यमित्यर्थः । स्वन्यायविरोधा-प्राप्तेरिति । वेदविद्यासु मनुष्याणामधिकृतत्वात्तेषां चांगुष्टसद्भावाद्युक्तं तान् प्रतिं विष्णोरंगुष्ट-मात्रत्वाभिधानमित्युक्तन्यायेन शूद्राणां मनुष्यत्वादंगुष्टमात्रत्वाच्च प्राप्ते वेदविद्याधिकारे श्रुत्यादिविरोधप्राप्तेरित्यर्थः ।

ननु न्यायप्राप्ते श्रुत्यादिविरोधेऽपि उक्ते विरोधाभाव शङ्का न परिहृतेत्यत आह ॥ स एवहीति ॥ उक्तमनुष्यत्वादेरधिकारोपयोगित्वं श्रुत्यादिबाधितम् । श्रुत्यादिविरुद्धाधिकारे शूद्रादौ विद्यमानत्वादिति भावः । पूर्वमविशेषादित्येतन्मनुष्यत्वे विशेषाभावादिति व्याख्याय शङ्कान्तर-परिहारकत्वेन न प्रकारान्तरेण व्याचष्टे ॥ विशिष्टेति ॥ शूद्रस्यापि विशिष्टबुध्यादिमत्वेन विशेषाभावादितिभावः । पौत्रायणं प्रतीति ॥ अहहारेत्वा शूद्रेति वचनस्य पौत्रायण-वक्तृकत्वाभावेन पौत्रायणस्योक्तेरिति षष्ठीतत्पुरुषसंभवादिति भावः । अनधिकारिणं प्रतीति ॥ अनेन पौत्रायणोक्तेरित्यस्य पौत्रायणं प्रतिरैकस्योपदेशादित्यपि व्याख्यानं सूचितं भवति ।

ननु गवाद्याशया मुनिनोपदेशः कृत इति किं न स्यादित्यत आह ॥ न हीति ॥ युक्त्या लिङ्गदर्शनेन चेति ॥ युक्तिर्मनुष्यत्वादिरूपा । लिङ्गं पौत्रायणस्य शूद्रेति संबोधितस्य वैदिक संवर्गविद्या विवादरूपे । मनुष्याधिकारत्वादित्युक्त इति भाष्यस्य मनुष्याधिकारस्योक्तत्वादिति स्वकृतव्याख्यानमुपपादयति ॥ उक्त इति ॥ सप्तमी पञ्चम्यर्थ इति ॥ सेदुराजेत्यादिवदिति ॥ यथा स इदित्यत्र छान्दसेन विसर्गलोपेन सेदिति गुणस्तथा हार इत्वेत्यत्रापि हारेत्वेति गुणः । यद्वा हारेत्वेत्येकं पदं व्यत्ययेन द्विवचनस्यैकवचनमित्याह ॥ हारेत्वा नावितिवा शुचाद्रव-णादेवेति ॥ अनेन तदाद्रवणादित्यत्र तच्छब्देन शुगस्येति प्रागुक्तशुचः परामर्श इत्युक्तं भवति ॥

ननु तदनादरेत्यत्र तच्छब्देन कस्य परामर्श इत्यत आह ॥ तदिति श्रुत्युक्तेति ॥ श्रुत्युक्तहंसेत्यर्थः । नन्वयं शोकेनागतः इति मुनिना कथं ज्ञायते इत्यत आह ॥ शोकेनेति ॥

स्मृतौ शोकादित्यस्य शोकेनाद्रवणादित्यर्थः । ननु सूत्रे आद्रवणादितिकिमर्थमुक्तं द्रवणा-दित्येवकिं नोक्तमित्यत आह ॥ दीर्घस्वरार्थत्वेनाद्रवणादित्युक्तमिति ॥ संहितायां यत्र दैर्घ्यं पदे यत्र न विद्यते । उक्तार्थस्य महाधिक्यं श्रुतेस्तत्रविवक्षितमित्यादि वचनैः श्रुतौ शूद्र इति दीर्घस्वरः शोकाधिक्यज्ञापनार्थमिति सूचयितुं सूत्रे आद्रवणादित्युक्तमित्यर्थः । शीघ्रगमनस्य शोकाधिक्यनिमित्तकत्वादितिभावः । ननु शुग्द्र इति भवेत् शूद्र इति कथमुक्तमित्यत आह ॥ शुग्द्र एवेति ॥ रुजंद्रावयते इत्यादि स्मृतौ रुग्द्रावणकर्तृत्वेन रुग्द्र इति भवितव्ये रुद्र इति यथा तथैवेत्यर्थः ॥

**॥ ॐ क्षत्रियत्वावगतेश्चोत्तरत्रचैत्ररथेन लिङ्गात् ॐ ॥ (१-३-३५)**

अयमश्वतरीरथ इति ॥ उत्तरत्र चित्ररथसंबन्धित्वं श्रूयत इत्यन्वयः । कस्मादुत्तरत्र श्रूयत इत्यत उक्तं पौत्रायणस्याद्रवणाच्छूद्रशब्देन संबोधनाद्वेति ॥ रैकं प्रतिपौत्रायणस्याद्रवणादनन्तरं रैकेमानि षट्शतानि गवामयं निष्कोऽयमश्वतरीरथ इति वाक्यस्य अहहारेत्वाशूद्रेति रैकेण पौत्रायणं प्रति शूद्रशब्देन संबोधनानन्तरं रैकेदं सहस्रं गवामयं निष्कोऽयमश्वतरीरथ इत्यर्थ तया अयं ग्रामो यस्मिन्नास्येस्म इति वाक्यस्य विद्यमानत्वादेवमुक्तमिति भावः । चित्ररथ-संबन्धित्वलिङ्गमित्यनेन सूत्रे चैत्ररथेनेति पदं भावप्रधानं सद्रथस्यान्यदीयत्व शङ्कानिरासाय पौत्रायणस्य चित्ररथसंबन्धित्वप्रतिपादकमिति ॥ चित्ररथसंबन्धित्वेनेति भाष्येणोक्तमिति सूचितम् । तेन च लिङ्गेनेति ॥ अनेन सूत्रे तृतीयापञ्चम्योः हेतुरूपैकार्थत्वाद्व्यत्यये-नतृतीयापञ्चम्यादेशाद्वाचैत्ररथेन लिङ्गादिति सामानाधिकरण्यमित्यभिप्रेत्य भाष्येचित्ररथ-सम्बन्धित्वेन लिङ्गेनेत्यभिहितमिति सूचितमिति ॥

नतु तस्य तदीयत्वमिति ॥ रथस्यपौत्रयणीयत्वमित्यर्थः । तदीयत्वस्यैव प्राप्तत्वादिति ॥ रैकायदानान्यथानुपपत्याषट्शतानिगवामित्यादौ पौत्रायण स्वामिकगवादिनासहपाठान्यथानु-पपत्या च रथस्य पौत्रायणीयत्वस्य प्राप्तत्वादित्यर्थः । रथस्य वेदाविनाभावादिति ॥ अत्र यत्रवह्निस्तत्रैवधूम इतिवद्यत्र वेदस्तत्रैवरथः यत्र न वेदस्तत्रनोरथ इति स्मृतेर्योजना सूचिता-भवति। ननु रथित्वेन क्षत्रियत्वसाधनमनुपपन्नं रथित्वस्यवैदिकेषु द्रोणादिष्वपि सत्वेन तत्र क्षत्रियत्वरूपसाध्याभावाद्व्यभिचार इति शङ्कते ॥ नन्वेवमिति ॥ मुख्यरथित्वस्य हेतूकृतत्वात् तत्र नैमित्तिकरथित्वस्यैव सत्वेन मुख्यरथित्वाभावान्नव्यभिचार इति परिहरति ॥ क्षत्रियस्येति ॥ तथा च प्राक् क्षत्रियत्वेन रथित्वमेव लिङ्गत्वेन विवक्षितं तस्यैव लिङ्गत्वसंभवात् चित्रपदं तु

स्वरूपकथनपरम् । अत एव अस्य प्रयोजकत्व शङ्कापरिहाराय वेदव्याप्यरथित्वरूपहेतूच्छित्तिरूपविपक्षबाधकतर्कसूचनाय रथमात्रस्य वेदव्याप्यत्वप्रतिपादकस्मृत्युदाहरणमिति भावः । नन्वपलायनं च शूद्रस्येत्यनेन प्राप्तयोद्धृत्वान्यथानुपपत्या शूद्रस्यापि रथित्वप्रतितेर्व्यभिचार इत्यत आह ॥ अपलायनं चेति ॥ योद्धृत्वस्यान्यथोपपत्तेर्न रथित्वाक्षेपकमिति भावः॥

॥ ॐ संस्कारपरामर्शात्तदभावाभिलापाच्च ॐ ॥ (१-३-३६)

लिङ्गेनेति ॥ पौत्रायणकर्तृकवेदव्यभिचाराख्यलिङ्गेनेत्यर्थः । अध्यापनार्थमिति ॥ न चोदाहृतश्रुतौ ब्राह्मणस्यैवाध्ययने उपनयनापेक्षा भवतीति वाच्यम् । ब्राह्मणपदेन ब्रह्माणनयोग्यानां त्रैवर्णिकानामुक्तेः । वेदः कृत्स्न इति स्पष्टमुपनयनाख्यद्वितीयजन्मवत एवाध्ययनविधानाच्चेति भावः । इत्यादिविद्यास्विति ॥ अत्रादिपदेन ईखयन्तीरपस्यवः सोम एकेभ्यः पवत इत्यादीनां ग्रहणम् । अनेन शूद्रप्रतिबन्दीति संस्काराभावेनाभाव इत्यस्य बाधकैकापोह्यसामान्यवचनत्वेनेत्यर्थः । बाधकैकापोह्यत्वादिति ॥ शच्यादाविवशूद्रादौ वेदाधिकारप्रतिपादकविशेषप्रमाणस्योक्तन्यायापवादकस्याभावादितिभावः । नन्वेवं स्त्रीणामप्यध्ययनस्य संस्कारपूर्वकत्वेनैवोपपत्तौ किमर्थं संस्काराभावेनाध्ययनाभावस्य समानन्यायत्वं भाष्येऽङ्गीकृतमित्यत आह ॥ अत्रापवादोक्तिरिति निषेधाभावादिति ॥ न कर्तव्य इति निषेधाभावादित्यर्थः ।

॥ ॐ तदभावनिर्धारणे च प्रवृत्तेः ॐ ॥ (१-३-३७)

ननु सामान्यतः प्राप्तस्य संस्कारादेर्नाग्निर्नयज्ञ इत्यक्तिरेव संस्कारो न कर्तव्य इति निषेधति इत्यत आह ॥ निषेधाभावेऽप्यभावोक्तिसंभवादिति ॥ नाग्निर्नयज्ञ इत्यादौ निषेधो नास्त्येवकिन्तर्ह्यभावोक्तिमात्रं संस्कारो न क्रियते इत्युक्तिमात्रमित्यर्थः । तथाच स्वरूपकथनमात्रपरत्वेनाप्युपपत्तेर्निषेधे तात्पर्यकल्पनायोगादिति भावः । नैतदब्राह्मणोविवक्तुमर्हतीति ॥ शूद्रत्वाभावनिर्धारण इति ॥ अनेन भाष्ये नैतदब्राह्मणो विवक्तुमर्हतीत्येद्वाक्यं शूद्रत्वाभावेत्यत्रान्वेतीत्युक्तं भवति । तर्हि सत्यवचनेनेत्यस्य कान्वय इत्यत उक्तमार्जवं ज्ञात्वेति ॥ इदमुक्तं भवति सत्यकामोन शूद्रः ऋजुत्वात् । न चैतदसिद्धम् । सत्यवचनेनतत्ज्ञानात् । न च व्याप्त्यभावः ।

॥ ॐ श्रवणाध्ययनार्थप्रतिषेधात्स्मृतेश्च ॐ ॥ (१-३-३८)

नैतदब्राह्मणोविवक्तुमर्हतीति व्यतिरेकव्याप्तेः सत्वादिति ॥ शूद्रत्वाभावमनुमायप्रवृत्तेरिति शङ्कते ॥ ननु श्रुताविति ॥ नैतदब्राह्मण इति श्रुतावित्यर्थः । शूद्रत्वाभावेत्यसूत्रयदिति ॥

तदभावनिर्धारण इत्यत्र तच्छब्देन शुगस्येत्यादिसूत्रैरुपलक्षितशूद्रत्वस्य परामर्शादिति भावः । उत्तरमाह ॥ ब्राह्मणपदेन ब्रह्माणनयोग्यानां त्रैवर्णिकानामुक्तेरिति ॥ एतत् श्रुतिव्याख्यान रूपायामार्जवं ब्राह्मणे साक्षाच्छूद्रोनार्जवलक्षण इति स्मृतौ ब्राह्मणप्रतियोगित्वेन शूद्रस्योपादानात् श्रुतावपि ब्राह्मणशब्दस्त्रैवर्णिकपर एव । तथाच श्रुतावब्राह्मणपदेन शूद्रस्याभिप्रेतत्वात् सूत्रे भाष्ये तदुक्तिर्युक्तेतिभावः । अर्थावधारण इति ॥ श्रुत्यनुसारेण सूत्रेत्यर्थपदेन तदवधारणं ग्राह्यमिति भावः । अविहितोपनयनानामेवेति ॥ अविहितोपनयनत्वे सत्यनिषिद्धाध्ययनानामुत्तमस्त्रीतिर्यगादीनामेवापवादविषयता । न तु निषिद्धाध्ययनानां शूद्राणामित्यर्थः । अत्राद्येसूत्रे पौत्रायणस्य शूद्रत्वाभावसिध्यर्थम् अह हारेत्वाशूद्रेति वाक्यगत शूद्रशब्दस्य यौगिकत्वोक्तिः । द्वितीयेतस्य क्षत्रियत्वसाधकरथित्वरूप लिङ्गोक्तिः । तृतीये शूद्रे रथित्वाभावसिध्यर्थं रथित्वव्यापकवेदाध्ययन- प्रयोजकोपनयनादिसंस्कारस्याभावोक्तिः । चतुर्थे उपनयनादिसंस्काराभावाभिलापस्य शूद्रेतन्निषेधनिबन्धनत्वसिद्धये उपनयनादि संस्कारकरण शूद्रत्वाभावनिश्चयेन प्रवृत्तिरूपलिङ्गस्योक्तिः । पञ्चमे शूद्रस्य वेदश्रवणाध्ययनादेर्निषेधप्रमाणोक्तिरिति सूत्रक्रमः ।

## १०. कम्पनाधिकरणम् । ॐ कम्पनात् ॐ । (१-३-३९)

अत्र पूर्वं वैषम्येण वा पूर्वाक्षेपेण वा पूर्वपक्षोत्थानादनन्तरसङ्गतिः । वज्रश्रुतेरिति ॥ रूढेश्चयोगापेक्षया बलवत्वादिति भावः । नन्विदं विष्णुलिङ्गमेव किं न स्यादित्यत आह ॥ तद्धीति ॥ तथात्वादिति ॥ निरवकाशत्वादित्यर्थः । अत्र प्राण इति सप्तमीमंगीकृत्य तद्बलात् स्थितमित्यध्याहृत्य निःसृतशब्दानुरोधात् प्राणादित्यध्याहृत्य वा प्राण इत्यस्य निमित्तसप्तमीं विवक्षित्वा यस्मादित्यर्थत्वेन यदित्यावृत्य यदिदं किं चेति वाक्यं योजयति ॥ प्राणे स्थितमित्यादिना ॥ सर्वं जगदिति तृतीयव्याख्याने यदित्यस्यावृत्तिः । यच्छब्दबलात्प्राणवाचकतया स इति तच्छब्दलाभ इति दृष्टव्यम् । अत्रकोह्येवान्यादिति भाष्ये उदाहरिष्यमाणश्रुत्यनुसारेण तृतीयं व्याख्यानमिति ज्ञेयम् । शङ्कते । लिङ्गमात्रेण कथमयं निश्चय इति । उत्तरमाह ॥ लिङ्गस्येति ॥ सावकाशत्वे श्रुतिलिङ्गयोरिति ॥ तथाच पूर्वपक्षप्रापकाभावेन मोक्षजनकज्ञानविषयत्वस्यान्यगतत्वशङ्काया अयोगेन सिद्धान्तनिर्णायकत्वसंभवादिति भावः । एतदन्यत्राप्यनुसन्धेयमिति ॥ यत्र पूर्वाधिकरणसिद्धमन्वयश्रुतिलिङ्गादेः विष्णुनिष्ठत्वाक्षेपः पूर्वपक्षप्रापकश्रुत्यादेः विष्णाववकाशाभिधानं च तत्र पूर्वाधिकरणसिद्धस्य श्रुति-

लिङ्गादेराक्षेपायोगेन विष्णुमात्रनिष्ठत्वानपायात् सिद्धान्तनिर्णायकत्वं संभवतीत्यनुसन्धेयमित्यर्थः।

**११. ज्योतिरधिकरणम् । ॐ ज्योतिर्दर्शनात् ॐ । (१-३-४०)**

ज्ञानरूपत्वेन हृदयाहितत्वेनेति ॥ यथा ज्योतिःशब्दस्य लोकप्रसिद्धेरग्निमात्रनिष्ठत्वेऽपि ज्ञानरूपत्वलक्षणप्रवृतिनिमित्तस्य हृद्यन्तर्ज्योतिरिति विप्रतिपन्नवाक्ये श्रुतहृदयाहितत्वस्य लिङ्गस्य जीवेशयोः साम्यादेतन्निबन्धनोभयत्र प्रसिद्धिर्ज्योतिःशब्दस्य युक्तेतिभावः ।

श्रुत्यादिसंगतिमिति ॥ अत्र प्राणेषुहृद्यन्तर्ज्योतिरिति वाक्येन चेष्टकतया । प्राणेषु विद्यमानत्वेनोक्तस्य ज्योतिषः विष्णोरन्यत्वे यदिदं किंच जगदित्युक्तप्राणचेष्टक वज्रस्यापि विष्णोन्यत्वं स्यादित्यपि पूर्वाक्षेपसंभवादव्यवहितपूर्वाधिकरणसंगतिर्ज्ञातव्या । ननु लोक सञ्चरणं विष्णावपि संभवतीतिकथं तस्य जीवलिङ्गत्वमित्यत आह ॥ तस्यहि कर्मवशादिति ॥ इमं लोकमित्यादितस्यैवेति ॥ अस्यैवेतीदंशब्दस्य प्रकृतस्य जीवपरामर्शकत्वादिति भावः । आत्मज्योतिष्ट्वोक्ताविति ॥ प्रकाशत्वोक्तावित्यर्थः । आत्मज्योतिःशब्दयोः स्वरूपज्ञानार्थत्वादिति भावः । तदाविशेष्येति ॥ परमात्मनोऽस्तमयादिशून्यस्य जाग्रत्यपि ज्योतिष्ट्वप्रास्त्येत्येतदत्रापि संबध्यते । अत्रायं पुरुष इति ॥ आत्मप्रश्नोत्तरोपसंहाररूपेण अत्रायं पुरुषः स्वयंज्योतिरिति वाक्येनात्मैवास्य ज्योतिरित्युक्तस्यैवार्थस्य प्रत्यभिज्ञानादित्यर्थः । तथा यात्रायं पुरुष इति वाक्ये स्वयं शब्दानुरोधेन स्वप्रकाशत्वस्यैवोक्त्या तत्समानार्थत्वाय आत्मैवास्य ज्योतिरित्यस्यापि प्रकाशत्वार्थकत्वे आत्मप्रश्नोत्तरज्यातिःशब्दस्य जीवपरत्वमेवेति भावः ॥

॥ विष्ण्वैकवाचित्वेति ॥ विष्णुरेवेति भाष्योदाहृत श्रुतौ अन्ययोगव्यवच्छेदार्थकावधारणश्रवणादिति भावः । कुतो न विरोध इत्यतो जायमान इत्यादेरन्तर्णीतणिजर्थत्वेनोपपत्तेर्नतद्विरोध इत्याह ॥ द्रष्टुश्चक्षुष इत्यादाविति । तथाचेमं लोकमतिक्रामतीत्यादावतिक्रामयतीत्याद्यर्थ इत्यर्थः । नन्ववधारणस्य प्राधान्यज्ञापकत्वं कुतः अन्यव्यावर्तकत्वमर्थः किं न स्यादित्यत आह ॥ अन्यव्यावर्तकत्वस्येति ॥ जागरावस्थायामपि ज्ञानकरणानां वागादीन्द्रियाणां सत्वेनैवकारस्य ज्ञानकरणान्तरव्यवच्छेदत्वायोगादित्यर्थः । विशेषोक्तिर्ज्योतिरन्तराभावाभिप्रायेणेत्युक्तं तत्कुत इत्यत्र तत्र बृहदारण्यकभाष्यसम्मतिमाह ॥ तदुक्तमिति ॥ इत्युक्तरीत्योपपत्तेरिति । तथाचात्रायं पुरुष इत्यत्र स्वयंशब्दस्य परमात्मपरत्वेन

परमात्मज्योतित्वमेवोच्यते । जीवस्य न स्वप्रकाशत्वमिति नैतदनुरोधेनात्मैवास्य ज्योतिरित्यस्य स्वप्रकाशार्थकत्वमिति भावः ॥ श्रुतिमात्रस्येति ॥ प्राणेषु हृद्यान्तर्ज्योतिरित्यादौ विष्णुत्व-निश्चायकलिङ्गाद्यसमभिव्याहृतज्योतिः शब्दस्येत्यर्थः । किं तद्बहुबाधकमित्यतस्तान्याह ॥ प्रसिद्धत्वेत्यादिना ॥ स्वप्नेति ॥ अथरथान् रथयोगान् पथः सृजत इत्युक्तस्य स्वप्नपदार्थकर्तृत्वस्यसंभवादित्यर्थः ।

## १२. आकाशाधिकरणम् । ॐ आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॐ । (१-३-४१)

॥ प्रयोगवशादिति ॥ तद्धेतुव्यपदेशादित्युक्तरीत्या कोह्येवान्यान्कः प्राणयाद्यदेष आकाश आनन्दो न स्यादित्यादौ विष्णौ यः प्रयोगः आत्मन आकाश इत्यादौ यश्च भूते प्रयोगस्तद्व-शादित्यर्थः ॥ श्रुत्यादि संगतिमिति ॥ अत्र तद्ब्रह्म तदमृतमित्यमृतत्वेनाकाशस्य विष्णोरन्यत्वे बहिः स्वशब्दादित्यादाविति । अक्षरमम्बरान्तधृतेरित्यादावपि सर्वाधारत्वस्योक्तत्वादिति भावः ॥ आकाश इति ॥ अत्र वै नामेति निपातौ आकाशः नामरूपयोर्निवहितानामरूपधारकः ते नाम रूपे यदन्तरा यद्विना तदमृतं मरणरहितं ब्रह्मेत्यर्थः ॥ प्रसिद्ध एवेति ॥ एवंच भाष्ये प्रसिद्धाकाशश्चेति चशब्द एवार्थ इति भावः ॥ निपातद्वयविरोधादिति ॥ यद्यप्याका-शस्तल्लिङ्गादिति सूत्रस्य विषयवाक्ये अस्य लोकस्येत्यत्र सर्वाणि हवा इति वैशब्दाख्यनिपातो वर्तते । तथापि तत्र वैशब्दस्य सर्वशब्दभूतशब्दमध्यपति तत्वेन सर्वभूतान्वयान्ना-काशप्रसिद्धिद्योतकत्वं इहतु वैशब्दस्याकाशशब्द सन्निधानान्नान्यथासिद्धिः । नामेत्येतदधिकं चेति वैषम्यम् । अत एव भाष्ये वै नामेति निपातद्वयमुक्तमिति भावः । ननु कथं विष्णुपरत्वे निपातद्वयविरोधः । विष्णोरपि यदेष आकाश आनन्दो न स्यात् आकाशः परायणमित्यादौ नामरूपादिसर्वाधारतया आकाश शब्दार्थत्वेन प्रसिद्धत्वादित्यत आह ॥ न हीति ॥ तथाचाकाशस्यावकाशरूपत्वेन स्वरूपेण नामरूपावकाशादानात्तनिर्वाहकतया लोके वेदे च प्रसिद्धिवद्विष्णोः स्वरूपेण नामरूपनिर्वाहकतया च न लोकवेदयोः प्रसिद्धिरस्ति । न च वेदे प्रसिद्धिरस्तीति वाच्यम् । निपातद्वयेनासंकुचितप्रसिद्धिद्योतने संभवति । संकुचितवेदमात्र-प्रसिद्धिद्योतनस्यायुक्तत्वादिति भावः । अत एवाग्रेऽलोकप्रसिद्धत्वेपीत्युक्तम् । अर्थान्तर-त्वादिव्यपदेशादिति सूत्रभाष्यगतादि शब्दार्थमाह ॥ तद्ब्रह्मेति ॥ ब्रह्मत्वे व्यपदेशाच्चेत्यनेन भाष्ये तद्ब्रह्मेति श्रुत्यंशोदाहरणेन सूत्रगतादिशब्दो ब्रह्मत्वव्यपदेशार्थक इति सूचितम् ॥ आदिपदेनेति ॥ अस्मिन्पक्षे भाष्ये तद्ब्रह्मेति श्रुत्यंशोदाहरणेन सूत्रस्थादिशब्दोऽनुक्तब्रह्मत्व-

व्यपदेशरूपयुक्तिसूचनार्थम् । सूत्रेतदनुक्तिस्तु स्फुटत्वादिति भावः । यद्वा सूत्रभाष्ययोरादिशब्देनानामत्वं ब्रह्मत्वव्यपदेशश्चेति द्वयमपि ग्राह्यमिति भावः ।

ननु तेयदन्तरेत्यत्र तच्छब्देन नामरूपयोरिति प्रकृतनामरूपयोः परामर्शेन नामराहित्यमित्यर्थः । तथाच तत्र प्रमाणत्वेन प्रथमं यतो वाचोनिवर्तन्त इत्यनन्तरमवर्णमिति श्रुतिरुदाहर्तव्या । तत्कुतो वैपरीत्यमित्यत आह ॥ रूपस्यवाच्यन्तर्भाविनेति ॥ वाच्ये परमात्मन्यन्तर्भाविनेत्यर्थः । एवं च प्राधान्यकथनेनार्थन्तरत्वमिति । रूपराहित्यमिति व्याख्याने सूत्रेऽनात्मत्वादिव्यपदेशादित्येन वक्तव्यं कुतोऽर्थान्तरत्वादिव्यपदेशादित्युक्तमिति शङ्कापरास्ता भवति ॥ उक्तविरोधादिति ॥ ईक्षतेर्नाशब्दं रूपोपन्यासाच्चेत्यत्र शुक्लादिरूपवत्वस्य नामवाच्यत्वस्यचोक्तत्वेन तद्विरोधादित्यर्थः ॥ अनामेतीति ॥ अत्रानामरूपवत्वं साकल्येन शब्दगोचरत्वं प्राकृतरूपरहितत्वं विवक्षितम् । प्राक् तु अवाच्यत्वाभावः अप्राकृतरूपवत्वं च विवक्षितमिति न तेन विरोध इति भावः । कथं न निपातद्वयविरोध इत्यत आह ॥ भगवत इति ॥ वैदिकेऽर्थे लोकप्रसिध्यपेक्षया वैदिक प्रसिध्योः प्राबल्यम् । वैदिकप्रसिद्धिश्च विष्णौ तदीयनामरूपनिर्वहितृत्वे चाकाशापेक्षया बहुलेतिसैवनिपातद्वयद्योत्येत्यर्थः ॥ तदर्थत्वेनोपपत्तेरिति ॥ निपातद्वयस्य वेदप्रसिध्यर्थत्वेनोपपत्तेरित्यर्थः ॥ अन्यथेति ॥ वैदिकप्रसिध्यर्थत्वाभाव इत्यर्थः । आकाशस्याप्यनामरूपवत्वं भविष्यतीत्यत आह ॥ आकाशस्येति ॥ साकल्येन स्वप्रतिपादकनाम- प्राकृतरूपवत्वादित्यर्थः ।

**१३. सुषुप्त्यधिकरणम् । ॐ सुषुप्त्युत्क्रान्त्योर्भेदेन ॐ । (१-३-४२)**

॥ अत्र तेयदन्तरेति ॥ अर्थान्तरत्वेति ॥ श्रुतिसूत्रयोररूपोभूत- वर्जनादिति प्रमाणानुसारेण रूपराहित्ये भूतासंगतत्वस्य हेतुत्वेनाभिप्रेतत्वात् ॥ असंगोह्यमिति ॥ असंगतयोक्तस्वप्नादिद्रष्टुर्विष्णोरन्यत्वे प्रागभिप्रेतासंगतत्वमप्यन्यस्यैव स्यादित्यप्याक्षेप संभवादिति पूर्वाधिकरणसंगतिर्द्रष्टव्या । भाष्योदाहृते सयत्तत्रेत्यादिश्रुत्यंशे तत्रेत्यनेन परामृश्यापरिज्ञानात्स्वप्नादिद्रष्टृत्वस्य प्राप्तुमशक्यत्वात्तत्पूर्वांशमुदाहरति ॥ सवा एष इत्यादिना ॥ विशेषणद्वयसामानाधिकरण्येति ॥ असंगत्वस्यप्रादि द्रष्टृत्व विशेषणद्वयसामानाधिकरण्यान्यथानुपपत्येत्यर्थः ॥ सुषुप्तिप्रकरणस्येति ॥ तथाच मोक्षेविद्यमानत्वान्नतस्य व्यावहारिकत्वमिति भावः ॥ अनन्वागतपुण्येनेति ॥ आदिपदेन अत्र पिताऽपितात्यदेस्तीर्णोहि तदा सर्वांच्छोकान् हृदयस्य भवतीत्यादेर्ग्रहणम् । सुषुप्तिप्रकरणस्य मोक्षपरताया अभावे जीवपरत्वे तस्य पुण्यादिनाऽनन्वागतत्वाद्यनुपपत्तेरित्यर्थः ।

ननु स्वप्नादिद्रष्टृत्वस्योक्तरीत्येश्वरनिष्ठत्वेनासंगत्वेन सह विरोधाभावेऽपि संप्रसादे रत्वा चरित्वेत्याद्युक्तलिङ्गानामनन्वागतत्वेन भवतीत्याद्युक्तेश्वरलिङ्गैः सह कथं सामानाधिकरण्योपपत्तिरित्यत आह ॥ तत्र प्रतीतेति ॥ शुभाशुभन्तु दृष्टैव स्वप्ने जागरिते तथा । असंसृष्टः सदा दुःखैश्वरतीशः पुनः पुनरित्यादि बृहदारण्यकभाष्यादुक्तोभयविधलिङ्गोक्तिर्युक्तेति भावः ॥

**१४. पत्यधिकरणम् । ॐ पत्यादि शब्देभ्यः ॐ । (१-३-४३)**

प्राचीनाधिकरणे सुषत्प्युत्क्रान्त्योर्भेदेनेत्यधिकरणस्य जगत्स्रष्टत्वादेरित्यादिपदेन स्वप्नादि द्रष्टत्वादेरपि ग्रहणेन टीकायामेवाव्यवहितपूर्वाधिकरणे संगतिरुक्तेति द्रष्टव्यम् ॥ अभिसंहितमिति ॥ कण्ठतोऽनुक्तत्वादिति भावः । किं बलादभिसंहितत्वं ज्ञायत इत्यत आह ॥ अनन्याद्याक्षेपमिति ॥ बहुशोऽजशब्दश्रवणादिति ॥ स वा एष महानज आत्माऽजरोऽमर इत्यादि बहुवाक्यग्रहणाय स वा एष महानज आत्मेत्येतावदेवोदाहृतमिति भावः । अस्त्वज शब्दश्रवणं ततः किमित्यत आह ॥ अजशब्दस्येति ॥ विष्णुजातत्वयोगेनेति ॥ यद्यपि विरिञ्चेऽजशब्दस्य रूढिरप्यस्ति तथापि तस्मादहमजः स्मृतमिति भारतवचनाद्विष्णावपि रूढिरस्तीति विष्णुविरिञ्चयोरजशब्दस्य साम्यमेवेति भावः । ब्राह्मणशब्देन सहपाठेऽपि विष्णावनवकाशः कुत इत्यत आह ॥ अजशब्दस्येति ॥ अगोत्रमवर्णमित्यादेरर्थः । विष्णोर्ब्राह्मणजातिः सञ्जज्ञे ब्रह्मा चतुर्मुख इति वचनाच्चतुर्मुखस्य ब्राह्मणजातित्वात्तत्र ब्राह्मणशब्दः संभवतीति भावः ।

ननु विरिञ्चपक्षे महच्छब्दो न संभवतीत्यत आह ॥ महत्वेति ॥ तत्सिद्धेरिति ॥ विरिञ्चेश्वरयोरैक्य सिद्धेरित्यर्थः । कथं विरिञ्चेश्वरयोरेक्याभावे एतत्प्रकरणानुपपत्तिरित्यत आह ॥ तथाहीति ॥ स ब्राह्मणः साधुना पुण्येन कर्मणा भूयान् श्रेष्ठो न भवतीति असाधुनाऽपापकर्मणा कनीयान्नीचो न भवतीत्यर्थः । एतदिति ॥ पापाद्यलेपलिङ्गमित्यर्थः । ननु पापाद्यलेपलिङ्गत्वेन विष्णुरजशब्दार्थत्वेन विवक्षितः किंन स्यादित्यत आह ॥ लिङ्गद्वयस्यैकनिष्ठत्वादेवेत्यर्थः । विरिञ्चस्येश्वररूपत्वे प्रमाणंचाह ॥ सत्वमिति ॥

तथाच न केवलमेतत्प्रकरणान्यथानुपपत्या विष्णुविरिञ्चयोरैक्यसिद्धिः किन्तूदाहृतागमदपीतिभावः । विरिञ्चस्यापि स्वावरपतित्वादिना पत्यादिशब्दसंभवेन स्त्र्यपत्यादि शब्दानां विष्णुत्वानिश्चायकत्वात् श्रुतावपि सर्वस्याधिपतिरित्यादि श्रवणाच्चाह ॥ सर्वाधिपत्यादीति ॥ उतामृतत्वस्येशान इति वाक्येनैव सर्वाधिपतित्वं न प्रतीयत इत्यतो भाष्याभिप्रेतं पुरुष एवेदं

सर्वमिति तत्पूर्ववाक्यमपि व्याचष्टे ।। यद्भूतभविष्यद्वर्त्तमानमिति ।। पुरुष एवेत्यस्य व्याख्यानं परमपुरुषाधीनमिति ।। यदधीना यस्य सत्ता तत्तदित्येवभण्यते इत्यादेरिति भावः । उतशब्दस्यार्थो न केवलमिति । यच्छब्दस्य हेतुपरत्वम् अन्नशब्दस्य संसारिसमूहपरत्वं अतिरोहतीत्यस्यातिशयार्थत्वं चाश्रित्याह यस्मादित्यादिना ।

ननु सप्तार्धगर्भेति श्रुतिः कुत्रमानमित्यत आह ।। ईशानपदोक्तेति ।। ईशानशब्दस्यार्थद्वयम् ।। सर्वाधिपत्यं, सर्वप्रेरकत्वंच । श्रुतिरुभयत्रप्रमाणं सप्तेतिश्रुतिस्तु सर्वप्रेरकत्वे प्रमाणम् ।। अत्राज्ञाधारकत्वस्योक्तत्वादिति भावः ।। सयोगेतिश्रुतिः कस्मिन्नर्थेमानमित्यत आह ।। नेतिनेतीत्युक्तेरिति ।। ननु ब्राह्मणशब्दस्य ब्रह्मणावेदेनेत्याद्युक्तरीत्या यौगिकत्वे ब्रह्माण इति भवेत् ब्राह्मण इति कथमित्यत आह ।। स्वरव्यत्ययस्याधिकार्थत्वादिति ।। आधिक्येधिकमित्येवहरिणायत्समीरितम्, इति ऋग्भाष्ये उक्तत्वात् ब्रह्मणावेदेन गम्यत्वाधिक्यविवक्षयादीर्घ इत्यर्थः ।। अत्राण इत्यस्याश्रुतत्वाद्गम्यत इति कथमित्यत आह ।। अण् गताविति ।। अन्यथेति ।। यौगिकार्थानंगीकार इत्यर्थः ।। उपसंहरति अत इति ।।

इति श्रीपाण्डुरङ्गि केशवाचार्यविरचिते तत्त्वप्रकाशिकाविवृतौ
प्रथमाध्यायस्य तृतीय पादः समाप्तः ।।

श्रीविजयीन्द्रतीर्थविरचितः

# ब्रह्मसूत्रन्यायसङ्ग्रहः

## प्रथमाध्यायस्य तृतीयचतुर्थपादौ

द्युभ्वादेराश्रयोऽप्यतः ।
भूमा पूर्णसुखादे रक्षरमम्बरपूर्वधृत् ॥ ७ ॥

सदीक्षितृत्वाद्दहृत्खस्थो हत पाप्मत्वपूर्वकैः ।
कथं चित्त्वानुकूल्येन ग्राह्यं सर्वप्रकाशनात् ॥ ८ ॥

ईशानो वामनश्रुत्या देवा विद्याधिकारिणः ।
नासंस्कारादितः शूद्राः कम्पनाद्वज्रमीश्वरः ॥ ९ ॥

ज्योतिस्सावधृतिश्रुत्याऽऽकाशो नामाद्यभावतः ।
स्वप्नादिद्दगसंगत्वात् ब्राह्मणः पतिपूर्वतः ॥ १० ॥

ॐ नयाश्चतुर्दशाऽऽद्यस्य तृतीये षट् तदुत्तरे ।
अव्यक्तं तत्स्वतंत्रत्वाज्ज्योतिस्तावा इति श्रुतेः ॥ ११ ॥

रूपनानात्वतः पश्चाऽवान्तरं कारणं च सः ।
प्रकृतिश्च प्रतिज्ञादेः शून्यादिश्चोक्तहेतुतः ॥ १२ ॥

जिज्ञास्ये जीवभेदायाऽनन्तसद्गुणलक्षणम् ॥१३॥

ब्रह्मेत्युक्तं तत्प्रसिध्यै जन्माद्यस्येति सूत्रितम् ।
अनतिव्याप्तये तस्य शास्त्रयोनित्वमीरितम् ॥१४॥

तल्लक्षणद्वयोपेते मुख्याऽशेषागमार्थता ।
समोक्तोपक्रमादिस्तद्धेतुस्तुर्ये प्रतिश्रुतः ॥ १५ ॥

समर्थसिध्यै वाच्यत्वगतिसाम्ये निरूपिते ।
पञ्चमेऽथ प्रतिज्ञातसमन्वयसमर्थनम् ॥ १६ ॥

शब्दाश्चतुर्विधास्तत्रान्यत्रान्यत्रैव चोभयोः ।
प्रसिद्धा इति ते सर्वे नामलिङ्गात्मना द्विधा ॥१७॥

तत्रप्रसिद्धो विष्ण्वैकनिष्ठो विष्ण्वादिगीर्यथा ।
तदेकनिष्ठता सिद्धेर्न कार्यस्तत्समन्वयः ॥ १८ ॥

यत्राऽन्यवृत्तिरेकैव समन्वयविरोधिनी ।
उभयत्र प्रसिद्धं तदक्षरादिवचो यथा ॥ १९ ॥

ब्रह्मावृत्त्यन्यवृत्ती द्वे विरोधिन्यौ समन्वये ।
यत्राऽन्यत्र प्रसिद्धं तदिन्द्राकाशादिगीर्यथा ॥२०॥

उक्तद्वयं ब्रह्मवृत्तौ बाधकं च त्रयं यदा ।
अन्यत्रैव प्रसिद्धं तद्दुःखिबद्धादिगीर्यथा ॥ २१ ॥

आपातरूढिरहितधर्मद्वारा च धर्मिगम् ।
लिङ्गमन्यत्ततो नामान्तर्यामीन्द्रादिगीर्यथा ॥ २२ ॥

अन्यत्रैव प्रसिद्धानां दुःशकावगतित्त्वतः ।
सर्वाधिकारवैधुर्याच्चांत्यांघ्रौ तत्समन्वयः ॥ २३ ॥

अन्येष्वपि महामल्लभीरुभङ्गनयात्कृतः ।
आद्येऽन्यत्र प्रसिद्धानां नाम्नां तत्रापि मुख्यतः ॥२४॥

अमुख्यत्वादन्यगतलिङ्गानां तु द्वितीयगः ।
उभयत्र प्रसिद्धानां नामलिङ्गात्मनामपि ॥ २५ ॥

समन्वयस्तृतीयेंघ्रौ कृतोऽत्रैव प्रसंगतः ।
देवशूद्राधिकारैतदभावौ तु विचारितौ ॥ २६ ॥

छन्दोभिधसमाकर्षौ द्वावन्तर्ग(र्गु)णकौ नयौ ॥ २७ ॥

इति श्रीब्रह्मसूत्रन्यायसङ्ग्रहे विजयीन्द्रयतिविरचिते
प्रथमोऽध्यायः ॥ १ ॥

# ॥ श्रीधीरेन्द्रयतिविरचितः विषयवाक्यसङ्ग्रहः ॥

## प्रथमाध्याये तृतीयः पादः

यस्मिन् द्यौः पृथिवीत्येतद् द्युभ्वाद्यायतने नये ।
यो वै भूमेति यद्वाक्यं भूमाधिकरणस्य तु ॥ १ ॥

एतद्वैतदक्षरं गार्गीत्यन्तरनयस्य च ।
सदेव सौम्येति यद्वाक्यं सन्नये विषयार्पकम् ॥ २ ॥

दहरं पुण्डरीकं वैश्मेत्याद्यं दहरे नये ।
तदेतदिति मन्यन्त इत्याद्यनुकृतौ नये ॥ ३ ॥

अङ्गुष्ठमात्रमित्यादि शब्दादेवेति सन्नये ।
विश्वे देवा इति वचो देवतानयगं मतम् ॥ ४ ॥

पठेद्वेदानिति वचो ह्यपि शूद्रनये मतम् ।
महद्भयं वज्रमिति वाक्यं कम्पनसन्नये ॥ ५ ॥

प्राणे हृद्यंतरिति ज्योतिर्दर्शनके नये ।
आकाशोऽर्थान्तरत्वादिह्याकाशे च प्रसिद्धवाक् ॥ ६ ॥

स यत्तत्रे त्यादि वाक्यमसङ्गत्वनयस्य हि ।
महिमा ब्राह्मणस्येति वचः प्रत्यादिशब्दके ॥ ७ ॥

## अथ चतुर्थः पादः

महतः परमव्यक्तमिति वागानुमानिके ।
वसन्ते ज्योतिषेत्यादिनये ज्योतिरुपक्रमे ॥ १ ॥

संख्योपसङ्ग्रहनये पञ्च पञ्चजना इति ।
आकाशाद्वायुरित्येतत्कार्यकारणसन्नये ॥ २ ॥

सर्वे वेदा इति वचो समाकर्ष नयस्य तु ।
सैषा प्रकृतिरित्याद्यं वाक्यं तु प्रकृतौ नये ॥ ३ ॥

एतेन सर्वे व्याख्याता इत्यध्यायान्तिमे नये ।
असदेवेति तुच्छेनेत्याद्यं विषयदर्शकम् ॥ ४ ॥

॥ इति श्रीधीरेन्द्रयतिकृते विषयवाक्यसङ्ग्रहे प्रथमाध्यायस्य चतुर्थः पादः ॥

## ब्रह्मसूत्रभाष्ये प्रथमाध्यायस्य तृतीयचतुर्थपादयोः उदाहृतप्रमाणवचनानि ॥